पट्टंसुयघडओलिज्जमालं, कूरकपूरतंबोलविसालं ।
धवलदिंअंतसुवासिणिवग्गं, वुड्ढपुरंधिकहिअविहिमग्गं ॥ १५६ ॥
मग्गणजणदिज्जंतसुदानं, सयणसुवासिणिकयसम्माणं ।
मद्दलवायचउप्फललोयं, जणजणवयमणि जणियपमोयं ॥ १५७ ॥

तत्तथोक्तं, तथा नृत्यन्–नृत्यं कुर्वन् चारु–मनोज्ञा (नाम्) विलासिनीनां–विलासवत्स्त्रीणां वेश्यादीनां 'घट्टत्ति' समुदायो यत्र तत्तथोक्तं, पुनर्जयजयशब्दं कुर्व्वन्तः सुष्ठु–शोभना भट्टा–भट्टलोका यत्र तत्तथोक्तं ॥ १५५ ॥ तथा–पट्टांशुकैर्विविधवर्णोत्तमवस्त्रैरन्वितो मण्डपो यत्र तत् तथा, कूरमन्नादि तद्भोजनोपरि दीयमानानि कर्पूरेण–घनसारेण युक्तानि यानि ताम्बूलानि–नागवल्लीपत्राणि तानि विशालानि–विस्तीर्णानि यत्र तत् तथा, धवलं ददानो–मङ्गलगानं गायन् सुवासिनीनां–वधूटीनां वर्ग्गः–समूहो यत्र तत् तथोक्तं, तथा–वृद्धाः–पुरन्ध्यः पुत्रदुहित्रादिपरिवारयुक्ताः साध्व्यः स्त्रियस्ताभिः कथितो विधिमार्ग्गो–विवाहविधानमार्गो यत्र तत् तथोक्तम् ॥ १५६ ॥ तथा–मार्ग्गणजनेभ्यो– याचकलोकेभ्यो दीयमानं सुष्ठु–शोभनं दानं यत्र तत्, पुनः स्वजनानां–स्वकीयसम्बन्धिलोकानां सुवासिनीनां च कृतः सन्मानो–बहुमानो यत्र तत् तथा, मार्दलानां–मृदङ्गानां वादो–वादनं तेन चतुर्गुणा लोका यत्र तत् तथा, जनानां–पौरलोकानां जनपदानां च देशवासिलोकानां मनसि–चित्ते जनित–उत्पादितः प्रमोदो–हर्षो येन तत् तथा ॥ १५७॥

कारिअसुरसुंदरिसिणगारं, सिंगारिअअरिदमणकुमारं ।
हथलेवइ मंडलविहिचंगं, करमोयणकरिदाणसुरंगं ॥ १५८ ॥

एवं विहिअविवाहो, अरिदमणो लद्धहयगयसणाहो । **सुरसुंदरी**समेओ, जा निग्गच्छइ पुरवरीओ ॥ १५९ ॥
ता भणइ सयललोओ, अहोऽणुरूवो इमाण संजोगो । धन्ना एसा सुरसुं–दरी य जीए वरो एसो ॥ १६० ॥
केवि पसंसंति निवं, केवि वरं केवि सुंदरिं कन्नं । केवि तीऍ उज्झायं, केवि पसंसंति सिवधम्मं ॥ १६१ ॥

तथा कारितः **सुरसुन्दर्याः** कन्यायाः शृङ्गारो यत्र तत्, पुनः शृङ्गारितोऽ**रिदमनकुमारो** यत्र तत्, पुनः पाणिग्रहणसमये ब्राह्मणेन क्रियमाणो यो मण्डलविधिर्लोकप्रसिद्धस्तेन चङ्गं–रम्यं, तथा करमोचने–हस्तमोचनसमये राज्ञा कृतं हस्त्यश्वादिदानं तेन सुरङ्गम् ॥१५८॥ एवमुक्तप्रकारेण विहितः–कृतो विवाहो यस्य स तथा, लब्धाः–प्राप्ता ये हया–अश्वा गजाश्च–हस्तिनस्तैः सनाथः–सहितः, पुनः **सुरसुन्दर्या**–निजस्त्रिया समेतो–युक्तोऽ**रिदमनकुमारो** वर्या पुर्या यावदुज्जयिनीतो निर्गच्छति ॥१५९॥ तावत् सकलोऽपि–नगरलोको भणति, अहो ? इति आश्चर्येऽनयोः–कुमारकन्ययोरनुरूपो–योग्यः संयोगः–सम्बन्धः सञ्जात इति शेषः, च पुनः एषा **सुरसुन्दरी**कन्या धन्यास्ति यस्या एषोऽ**रिदमनकुमारो** वरो–भर्त्ता जातः ॥ १६० ॥ पुनः तदवसरे केऽपि लोकाः राजानं प्रशंसन्ति, केऽपि वरं–कुमारं प्रशंसन्ति, केऽपि **सुरसुन्दरीं** कन्यां प्रशंसन्ति, केऽपि लोकास्तस्याः–कन्याया उपाध्यायं–गुरुं प्रशंसन्ति, केऽपि पुनः शिवधर्मं प्रशंसन्ति ॥ १६१ ॥

सुरसुन्दरिसम्माणं, मयणाइ विडंबणं जणो दट्ठुं । सिवसासणप्पसंसं, जिणसासणनिंदणं कुणइ ॥ १६२ ॥
इओ य-निअपेडयस्स मज्झे, रयणीए उंबरेण सा मयणा। भणिआ भद्दे! निसुणसु,इमं अजुत्तं कयं रन्ना ॥१६३॥
तहवि न किंपि विणट्ठं, अज्जवि तं गच्छ कमवि नररयणं। जेणं होइ न विहलं, एयं तुह रूवनिम्माणं ॥१६४॥
इअ पेडयस्स मज्झे, तुज्झवि चिट्ठंतिआइ नो कुसलं। पायं कुसंगजणिअं, मज्झवि जायं इमं कुट्ठं ॥ १६५ ॥

तस्मिन्नवसरे सुरसुन्दर्याः सन्मानं-सत्कारं दृष्ट्वा मदनसुन्दर्यास्तु विटम्बनां दृष्ट्वा जनो-बहिर्दृष्टिर्लोकः शिवशासनस्य-शिवमतस्य प्रशंसां करोति, जिनशासनस्य निन्दनं-निन्दां करोति ॥१६२ ॥ इतश्च-इतःपरमित्यर्थः, निजपेटकस्य-निजसमुदायस्य मध्ये रजन्यां-रात्रौ उम्बरेण-उम्बरराजेन सा मदनसुन्दरी भणिता-उक्ता, मदनसुन्दर्यै इदमुक्तमित्यर्थः, किमित्याह-हे भद्रे! हे शोभने! त्वं शृणु राज्ञा-त्वत्पित्रा इदं अयुक्तं कृतं यन्मह्यं विनष्टांगाय त्वं प्रदत्तेति भावः ॥ १६३ ॥ तथापि किमपि विनष्टं नास्ति, अद्यापि त्वं कमपि नररत्नं-पुरुषश्रेष्ठं प्रति गच्छ-अन्यं नीरुक्पुरुषं स्वीकुरु इत्यर्थः,येन एतत्तव रूपस्य निर्माणं-रचनं विफलं-निष्फलं न भवेत् ॥ १६४ ॥ इहास्मिन् पेटकस्य-समुदायस्य मध्ये तिष्ठन्त्यास्तवापि कुशलं-शुभं नास्ति, कथमित्याह-( प्रायो बाहुल्येन ) कुसंगेन जनितं-उत्पादितं ममापि इदं-कुष्ठं जातं तन्मा कदाचित् तवापि भवेदिति भावः ॥ १६५ ॥ 

तो तीए मयणाए, नयणंसुयनीरकलुसवयणाए। पइपाएसु निवेसिअ--सिराइ भणिअं इमं वयणं ॥ १६६ ॥
सामिअ! सव्वं मह आ--इसेसु किंचेरिसं पुणो वयणं। नो भणियव्वं जं दूहवेइ मह माणसं एयं ॥१६७॥
अन्नं च--पढमं महिलाजम्मं, केरिसयं तंपि होइ जइ लोए। सीलविहूणं नूणं, ता जाणह कंजिअं कुहिअं ॥ १६८ ॥
सीलं चिअ महिलाणं, विभूसणं सीलमेव सव्वस्सं । सीलं जीवियसरिसं, सीलाउ न सुंदरं किंपि ॥ १६९ ॥

ततस्तदनन्तरं तया-मदनसुन्दर्या इदं-वक्ष्यमाणं वचनं भणितं--उक्तं,कीदृश्या तया?--नयनयोः-चक्षुषोर्यत् अश्रुनीरं-अश्रुजलं तेन कलुषं-गडुलं वदनं-मुखं यस्याः सा तथा तया। पुनः कीदृश्या ?-पत्युः-भर्तुः पादयोः-चरणयोर्निवेशितं-स्थापितं शिरो-मस्तकं यया सा तया । किं भणितमित्याह--॥ १६६ ॥ हे स्वामिन्! मह्यं अन्यत् सर्वं कार्यं आदिश-अनुजानीहि, किन्तु ईदृशं वचनं पुनर्नो भणितव्यं--न कथनीयं, कथमित्याह-यद्यस्मात्कारणात् एतद्वचनं मम मानसं दुःखापयति--यतः दुखितं करोतीत्यर्थः ॥१६७॥ अन्यच्च-अन्यदपि सा भणति, प्रथमं महिलाजन्म-स्त्रीजन्म कीदृशं? अशुद्धमेवेति भावः । तदपि स्त्रीजन्म यदि लोके शीलविहीनं-ब्रह्मचर्यरहितं भवति तत्तर्हि नूनं-निश्चितं कुथितं काञ्जिकं-आरनालं यूयं जानीत, तत्सदृशं अतीवाशुद्धमिति भावः ॥ १६८ ॥ यतो महिलानां-स्त्रीणां शीलमेव विभूषणम्--आभरणमस्ति, तथा-शीलमेव सर्वस्वं--सर्वसारमस्ति, पुनः स्त्रीणां शीलं जीवितसदृशं--जीवितव्यतुल्यं वर्त्तते, तासां शीलात् अधिकं सुन्दरं--रम्यं किमपि नास्ति ॥ १६९ ॥

ता सामिअ! आमरणं, मह सरणं तंसि चेव नो अन्नो। इअ निच्छियं वियाणह, अवरं जं होइ तं होउ ॥१७०॥
एवं तीए अइनिच्च-लाइ दढसत्तपिक्खणनिमित्तं। सहसा सहस्सकिरणो, उदयाचलचूलिअं पत्तो ॥ १७१ ॥
मयणाए वयणेणं, सो उंबरराणओ पभायंमि । तीए समं तुरंतो, पत्तो सिरिरिसहभवणंमि ॥ १७२ ॥
आणंदपुलइअंगेहिं, तेहिं दोहिवि नमंसिओ सामी। मयणा जिणमयनिउणा, एवं थोउं समाढत्ता ॥ १७३ ॥

तस्मात् हे स्वामिन् ! आमरण-मरणपर्यन्तं मम त्वमेव शरणं-आश्रयोऽसि, अन्यो न कश्चित् शरणम् , इत्येतत् निश्चितं-निश्चययुक्तं यूयं विजानीत, अपरं-अन्यत् यद्भवति तद्भवतु ॥ १७० ॥ एवमुक्तप्रकारेण अतिनिश्चलायास्तस्या-मदनसुन्दर्या यत् दृढं सत्त्वं-धैर्यं तस्य प्रेक्षणनिमित्तं-दर्शनार्थं सहसाऽकस्मात् सहस्रकिरणः-सूर्यः उदयाचलस्य-निषधपर्वतस्य चूलिकां-शिखां प्राप्तः सूर्य उदित इत्यर्थः ॥ १७१ ॥ ततो मदनसुन्दर्या वचनेन स उम्बरराजः प्रभाते-प्रातःकाले तया-स्वस्त्रिया समं-सह त्वरमाणः-उत्तालः सन् श्रीऋषभदेवस्य-जिनराजस्य भवने-मन्दिरे प्राप्तः ॥ १७२ ॥ आनन्देन-हर्षेण पुलकितं-रोमोद्गमयुक्तं अंगं-शरीरं ययोस्तौ ताभ्यां तथोक्ताभ्यां, ताभ्यां-वधूवराभ्यां द्वाभ्यामपि श्रीऋषभस्वामी नमस्यितो-नमस्कृतः, अथ जिनमतविषये निपुणा-दक्षा मदनसुन्दरी एवं-वक्ष्यमाणप्रकारेण स्तोतुं-स्तुतिं कर्तुं समारब्धा-प्रारंभं कृतवती लग्नेति यावत् ॥ १७३ ॥

भत्तिभरनमिरसुरिंदविंद-वंदिअपय पढमजिणंदचंद ।
चंदुज्जलकेवलकित्तिपूरपूरियभुवणंतरवेरिसूर ॥ १७४ ॥
सूरुव्व हरिअतमतिमिर देव देवासुरखेयरविहिअसेव ।
सेवागयगयमयरायपायपायडियपणामह कयपसाय ॥ १७५ ॥

भक्तिभरेण-भक्तिप्रकर्षेण नम्राणि-नमनशीलानि यानि सुरेन्द्रवृन्दानि-देवेन्द्रसमूहास्तैर्वन्दितौ पादौ-चरणौ यस्य स तत्सम्बोधने हे भक्तिभर०! पुनर्हे प्रथमजिनेन्द्र! चन्द्र इव चन्द्र आल्हादकः, पुनश्चन्द्रवत् उज्ज्वलो-धवलः केवलः-सम्पूर्णो यः कीर्त्तिपूरो-यशः-समूहस्तेन पूरितं-भरितं भुवनं-लोकत्रयं येन स तत्सम्बुद्धौ चन्द्रोज्ज्व० पुनः आन्तरा-मध्यवर्त्तिनो ये वैरिणः-कामक्रोधादयस्तेषां जये शूरस्तत्सम्बोधने हे० ॥ १७४ ॥ पुनः सूरः-सूर्यः स इव हृतं-दूरीकृतं तमोऽज्ञानमेव तिमिरं-अन्धकारं येन स तत्सम्बुद्धौ हे हततमस्तिमिर! हे देव! पुनः देवाः-वैमानिकादयो असुरा-भवनपत्यादयः खेचरा-विद्याधरास्तैर्विहिता-कृता सेवा यस्य सः तत्सम्बोधने हे देवा०!, सेवार्थमागताः-सेवागताः गतो मदो येषां ते गतमदाः-परित्यक्ताहंकारा इत्यर्थः एवंविधा ये राजानस्तैः पादयोः प्रकटितः प्रणामो-नमस्कारो यस्य स तत्सम्बोधने हे सेवा० पुनः कृतः प्रसादो येन स तत्सम्बोधने हे कृतप्रसाद! ॥ १७५ ॥

सायरसमसमयामयनिवास, वासवगुरुगोयरगुणविकास ।
कासुज्जलसंजमसीललील, लीलाइ विहिअमोहावहील ॥ १७६ ॥
हीलापरजंतुसु अकयसाव, सावयजणजणिअआणंदभाव ।
भावलयअलंकिअ रिसहनाह, नाहत्तणु करि हरि दुक्खदाह ॥ १७७ ॥

पुनः सागरसमः-समुद्रतुल्यः समता एव अमृतं-पीयूषं तस्य निवासः सागरसमसमतामृतनिवासस्तत्सम्बोधने हे सागरसमसमतामृतनिवास! पुनः वासवः—इन्द्रस्तस्य गुरुर्लोकोक्त्या बृहस्पतिस्तस्य गोचरो-विषयभूतो गुणानां विकासो-विस्तारो यस्य सः तत्सम्बोधने हे वासव०! पुनः कासस्तृणविशेषस्तद्वत् उज्ज्वला संयमशीलयोः-चारित्रस्वभावयोर्लीला-क्रीडा यस्य स तत्सम्बोधने हे का०! पुनः लीलया-लीलामात्रेण विहिता-कृता मोहस्य-मोहनीयकर्म्मणोऽवहीला-अनादरो येन स तत्सं० हे० ! ॥ १७६ ॥ पुनः हीला--हीलनमेव परा-प्रधानं येषां ते हीलापरा एवंविधा ये जन्तवो-जीवास्तेषु न कृतः शाप-आक्रोशो येन स तत्सं० हे० पुनः श्रावकजनानां जनित-उत्पादित आनन्दभाव-आनन्दोदयो येन स श्रावक०स्तत्सम्बोधने हे श्रावक० पुनः भा-प्रभा तस्या वलयं-मण्डलं तेन अलंकृतः-शोभितः तत्सं० हे० पूर्वोक्तविशेषणविशिष्ट हे ऋषभनाथ ! नाथत्वं कुरु, मम योगक्षेमकृद्भवेत्यर्थः, तथा-मम दुःखदाहं हर-दूरीकुरु इत्यर्थः ॥ १७७ ॥

इअ रिसहजिणेसर भुवणदिणेसर, तिजयविजयसिरिपाल पहो ! ।
मयणाहिअ सामिअ सिवगइगामिअ, मणह मणोरह पूरिमहो ॥ १७८ ॥

एवं समाहिलीणा, मयणा जा थुणइ ताव जिणकंठा । करठिअफलेण सहिआ, उच्छलिआ कुसुमवरमाला ॥ १७९ ॥
मयणावयणाओ उंबरेण सहसत्ति तं फलं गहिअं । मयणाइ सयं माला, गहिया आणंदिअमणाए ॥ १८० ॥

इत्युक्तप्रकारेण हे ऋषभजिनेश्वर ! हे भुवनदिनेश्वर ! भुवने-लोके दिनेश्वरः-सूर्य इव भुवन० तत्सं० पुनस्त्रिजगतो-जगत्त्रयस्य या विजयश्रीः-विजयलक्ष्मीस्तां पालयतीति त्रि० श्रीपालस्तत्सं० हे त्रिजग० हे प्रभो ! पुनः हे मदनाहितः मदनः-कामस्तस्याऽहितः-शत्रुः हे स्वामिन् ! हे शिवगतिगामिन् मम मनसो मनोरथान्-अभिलाषान् पूरय इति तात्पर्यार्थः, पुनरयं तिजयविजयेत्यादि-त्रिजगति विजयो यस्य स त्रिजगद्विजयः, श्रीपालस्य प्रभुः श्रीपालप्रभुस्तत्सं०तथा "मयणाहिय"त्ति मदनसुन्दर्या हितो-हितकारी तत्संबो० इति ॥ १७८ ॥ एवममुना प्रकारेण समाधौ-चित्तैकाग्र्ये लीना-मग्ना मदनसुन्दरी यावत् स्तौति तावत् जिनस्य-भगवतः कण्ठात् करस्थितबीजपूरकादिफलेन सहिता कुसुमानां-पुष्पाणां वरा-प्रधाना माला उच्छलिता ॥ १७९ ॥ तदा मदनसुन्दरीवचनात् उम्बरराजेन सहसा-सद्यस्तत्फलं गृहीतं इति पादपूरणे तथा आनन्दितं मनो यस्याः सा आनन्दितमनास्तया तादृश्या मदनसुन्दर्या स्वयमात्मना माला गृहीता ॥ १८० ॥

भणिअं च तीइ सामिअ, फिट्टिस्सइ एस तुम्ह तणुरोगो। जेणेसो संजोगो, जाओ जिणवरकयपसाओ ॥ १८१ ॥

तत्तो मयणा पइणा--सहिआ मुनिचंदगुरुसमीवंमि। पत्ता पमुइअचित्ता, भत्तीए नमइ तस्स पए ॥ १८२ ॥

गुरुणो य तया करुणापरित्तचित्ता कहंति भवियाणं। गंभीरसजलजलहर-सरेण धम्मस्स फलमेवं ॥ १८३ ॥

सुमाणुसत्तं सुकुलं सुरूवं,सोहग्गमारुग्गमतुच्छमाउ।रिद्धिं च विद्धिं च पहुत्तकित्ती,पुन्नप्पसाएण लहंति सत्ता १८४

च पुनः तया—मदनसुन्दर्या भणितं हे स्वामिन्! एष—युष्माकं तनुरोगो—देहव्याधिः 'फिट्टिस्सइ'त्ति अपयास्यति, येन कारणेन एष संयोगो जिनवरेण--ऋषभस्वामिना कृतः प्रसादो यस्मिन् स ईदृशो जातोऽस्ति, तेन ज्ञायते,इत्यर्थः॥ १८१ ॥ ततस्तदनन्तरं मदनसुन्दरी पत्या—स्वभर्त्रा सहिता मुनिचन्द्राख्यगुरूणां समीपे प्राप्ता, तदा प्रमुदितं—हृष्टं चित्तं यस्याः सा तथाविधा सती भक्त्या तस्य—गुरोः पादौ—चरणौ नमति ॥१८२॥ तदा—तस्मिन्काले करुणया--कृपया परीतं—व्याप्तं चित्तं येषां ते तथाविधा गुरवश्च भव्यजीवानां पुरस्तात् सजलो--जलभृतो यो जलधरो—मेघस्तद्वद्गम्भीरो यः स्वरस्तेन एवं—वक्ष्यमाणप्रकारेण धर्म्मस्य फलं कथयन्ति ॥ १८३ ॥ कथमित्याह-सुष्ठु—शोभनं मानुषत्वं तत्रापि सुकुलं—उत्तमं गोत्रं, तत्र पुनः शोभनं रूपमाकृतिः पञ्चेन्द्रियपटुतेत्यर्थः, तत्रापि सौभाग्यं—सर्वजनवल्लभत्वं, तथा आरोग्यं—नीरोगता पुनः अतुच्छं—प्रचुरं आयुर्जीवितं, तथा ऋद्धिं-सम्पदं च पुनः वृद्धिं—पुत्रादिपरिवाररूपां, तथा प्रभुत्वं—स्वामित्वं कीर्तिर्यशः, प्रभुत्वं च कीर्त्तिश्च प्रभुत्वकीर्त्ती ते, एतानि वस्तूनि सत्त्वाः—प्राणिनः पुण्यप्रसादेन—धर्म्मप्रभावाल्लभन्ते—प्राप्नुवंति ॥ १८४ ॥

इच्चाइदेसणंते, गुरुणो पुच्छंति परिचियं मयणं। वच्छे कोऽयं धन्नो, वरलक्खणलक्खिअ सुपुन्नो ? ॥ १८५ ॥

मयणाइ रुअंतीए, कहिओ सव्वोवि निअयवुत्तंतो। विन्नत्तं च न अन्नं, भयवं! मह किंपि अत्थि दुहं ॥ १८६ ॥

एयं चिअ मह दुक्खं, जं मिच्छादिट्ठिणो इमे लोआ। निंदंति जिणह धम्मं, सिवधम्मं चेव संसंति ॥ १८७ ॥

ता पहु कुणह पसायं, किंपि उवायं कहेह मह पइणो। जेणेस दुट्ठवाही, जाइ खयं लोअवायं च ॥ १८८ ॥

पभणेइ गुरू भद्दे! साहूणं न कप्पए हु सावज्जं। कहिउं किंपि तिगिच्छं, विज्जं मंतं च तंतं च ॥ १८९ ॥

इत्यादिदेशनाया अन्ते गुरवो निजपरिचितां मदनसुन्दरीं पृच्छन्ति, हे वत्से—हे पुत्रि! अयं पुरोवर्त्ती धन्यः--प्रशस्यः पुनः वरैः--प्रधानैः लक्षणैर्लक्षितस्तथा शोभनं पुण्यं यस्य स ईदृशः कः पुरुषोऽस्ति?॥ १८५॥ तदा मदनसुन्दर्या रुदत्या-रोदनं कुर्वत्या सर्वोऽपि निजकवृत्तान्तः कथितः च पुनः इत्थं विज्ञप्तं—हे भगवन्--हे पूज्य! मम अन्यत्—अपरं किमपि दुःखं नास्ति॥१८६॥ किन्तु एतदेव महद्दुःखं यन्मिथ्यादृष्टय इमे लोकाः जिनधर्म्मं निन्दन्ति, शिवधर्म्मं--मिथ्याधर्ममेव च प्रशंसन्ति ॥ १८७ ॥ तस्मात् हे प्रभो!—हे स्वामिन्! यूयं प्रसादं कुरुत, कमपि उपायं कथयत येनोपायेन मम पत्युः एष दुष्टव्याधिः--कुष्ठरोगः क्षयं याति च पुनः लोकवादो--लोकापवादः क्षयं याति ॥ १८८ ॥ ततो गुरुः प्रभणति—वदति, हे भद्रे! साधूनां किमपि सावद्यं—सदोषं वस्तु कथयितुं न कल्पते, किं? तदित्याह--चिकित्सां--वैद्यकं, पुनर्विद्यां च पुनर्मन्त्रं च पुनस्तन्त्रं, एतानि सावद्यानि साधुभिर्न कथनीयानि इत्यर्थः ॥ १८९ ॥

तहवि अणवज्जमेगं, समत्थि आराहणं नवपयाणं । इहलोइअपारलोइअ--सुहाण मूलं जिणुद्दिट्ठं ॥ १९० ॥
अरिहं सिद्धायरिआ, उज्झाया साहूणो य सम्मत्तं । नाणं चरणं च तवो, इअ पयनवगं परमतत्तं ॥ १९१ ॥
एएहिं नवपएहिं, रहिअं अन्नं न अत्थि परमत्थं । एएसुच्चिअ जिणसासणस्स सव्वस्स अवयारो ॥ १९२ ॥
जे किर सिद्धा सिज्झंति जेअ जे आवि सिज्झइस्संति । ते सव्वेवि हु नवपय--झाणेणं चेव निब्भंतं ॥१९३॥
एएसिं च पयाणं, पयमेगयरं च परमभत्तीए । आराहिऊण णेगे, संपत्ता तिजयसामित्तं ॥ १९४ ॥

तथापि एकं नवपदानामाराधनं अनवद्यं--निर्दोषं समस्ति--विद्यते, कीदृशं तत् ?--ऐहलौकिकपारलौकिकसुखानां--इहभवपरभवसौख्यानां मूलं--मूलकारणं, पुनः कीदृशम् ?--जिनेन--भगवता उद्दिष्टं--कथितम् ॥ १९० ॥ नवपदनामान्याह--अर्हन्तः १ सिद्धाः २ आचार्याः ३ उपाध्यायाः ४ साधवः ५ च पुनः सम्यक्त्वं ६ ज्ञानं ७ चरणं--चारित्रं ८ च पुनः तपः ९ इत्येतत्पदानां नवकं परमतत्त्वं वर्त्तते ॥ १९१ ॥ एतैः नवभिः पदै रहितो--वर्जितोऽन्यः परमार्थस्तात्त्विकोऽर्थो नास्ति, एतेष्वेव--नवपदेषु सर्वस्य जिनशासनस्य--जिनमतस्य अवतारः--अवतरणमस्ति ॥ १९२ ॥ किलेति--निश्चितं ये जीवा अतीते काले सिद्धाः--मुक्तिं गताः, ये च वर्त्तमानकाले सिद्ध्यन्ति, ये चापि अनागते काले सेत्स्यन्ति--सिद्धिं यास्यन्ति, हुः पादपूरणे ते सर्वेपि निर्भ्रान्तं--निस्संदेहं नवपदध्यानेनैव न तु तद्व्यतिरेकेणेत्यर्थः ॥ १९३ ॥ च पुनः एतेषां पदानां मध्यात् एकतरं--अन्यतममेकं पदं परमभक्त्या आराध्य--संसेव्य अनेके जीवाः त्रिजगत्स्वामित्वं सम्प्राप्ताः--सकलकर्मक्षयेण त्रिभुवनस्वामिनो जाता इत्यर्थः ॥ १९४ ॥

एएहिं नवपएहिं, सिद्धं सिरिसिद्धचक्कमेअं जं । तस्सुद्धारो एसो, पुव्वायरिएहिं निद्दिट्ठो ॥ १९५ ॥
गयणमकलिआयंतं, उड्ढाहसरं सनायबिन्दुकलं । सपणवबीआणाहय--मंतसरं सरह पीढंमि ॥ १९६ ॥

एतैर्नवभिः पदैः सिद्धं--निष्पन्नं यदेतत् श्रीसिद्धचक्रं, तस्य--सिद्धचक्रस्य एष उद्धारः पूर्वाचार्यैर्निर्दिष्टः--कथितः ॥ १९५ ॥ अथ ग्रन्थकार एकादशगाथाभिः सिद्धचक्रोद्धारविधिमाह--गयणेत्यादि, अत्र गगनादिसंज्ञा मन्त्रशास्त्रेभ्यो ज्ञेया, तत्र गगनशब्देन ह इत्यक्षरमुच्यते, 'पीढंमि'त्ति मूलपीठे--यन्त्रस्य सर्वमध्ये ह इत्यक्षरं यूयं स्मरत, इह च स्मरणमेवाधिकृतं स्मरणस्याशक्यत्वे पदस्थध्यानसाधनार्थं मनोज्ञद्रव्यैर्वेहिकापट्टादौ लिखनमपि पूर्वाचार्यैराम्नातं, एवमग्रेऽप्यूह्यं, तत्रादौ हकाराक्षरं लेखनीयमिति प्रकृतं, तत्कीदृशं ? इत्याह--अस्य अकाराक्षरस्य कलिका व्याकरणसंज्ञामयी वक्राऽइत्यक्षररूपा तयाऽवन्तं- सहितं आदौ कलिकया युक्तं ततोऽह इति स्यात् पुनः तद्गगनबीजं कीदृशं ?--'उड्ढाहसरं' उर्ध्वाधः सह रेण--रकारेण वर्त्तते इति सरं हकारस्योर्ध्वमधश्च रकारो दीयते, ततोऽर्ह इति जातं, पुनः कीदृशं तत् ?--सनादबिन्दुकलं नादोऽर्द्धचन्द्राकारोऽक्षरस्योपरि अनुनासिकः बिन्दुकला च पूर्णेऽनुस्वारः ततो नादश्च बिन्दुकला च ताभ्यां सहितं ततोऽर्हँ इति जातं, पुनः कीदृशं ?--'सपणवबीयाणाहयं' प्रणव--ओङ्कारः बीजं--ह्रीङ्कारः अनाहतं च कुण्डलाकारं ततश्च द्वन्द्वस्तैः सहितं, अत्राम्नायः--अर्हं इति बीजं ओङ्कारोदरे न्यस्येत्, एतच्च बीजद्वयं ह्रीङ्कारोदरे न्यस्येत् ततश्च ह्रीङ्कारस्येकारस्वरात् रेखां पश्चाद्वालयित्वा द्विःकुण्डलाकारेणाऽनाहतेन तद्बीजत्रयमपि वेष्टयेत्, पुनः कीदृशं ?--अन्त्यस्वरं--अन्त्ये स्वराः--अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः एते षोडश यस्य तत्, पूर्वोक्तस्य सर्वतः स्वरान् न्यस्येदित्यर्थः, इत्येतावत्कर्णिकायां ध्येयम् ॥ १९६ ॥

झायह अडदलवलए, सपणवमायाइएसुवाहंते । सिद्धाइए दिसासुं, विदिसासुं दंसणाईए ॥ १९७ ॥
बीअवलयंमि अडदिसि, दलेसु साणाहए सरह वग्गे । अंतरदलेसु अट्ठसु, झायह परमिट्ठिपढमपए ॥१९८॥

अथ पीठं लिखित्वा तत्पार्श्वे वृत्तमण्डलं लिखेत्, तदुपरि अष्टदलकमलाकारं वलयं लिखेत्, तत्राष्टदलवलये चतुर्षु दिक्पत्रेषु प्रणवमायादिकान् स्वाहांतान् सिद्धादिकान् चतुर्थीबहुवचनांतान् ध्यायतः, प्रणव-ओङ्कारो माया-ह्रीङ्कारस्तौ आदी येषां ते तान् तथा स्वाहाऽन्ते येषां ते तान्, लिखनविधिः यथा-ओं ह्रीं सिद्धेभ्यः स्वाहा पूर्वस्यां १, ॐ ह्रीं आचार्येभ्यः स्वाहा दक्षिणस्यां २, ॐ ह्रीं उपाध्यायेभ्यः स्वाहा पश्चिमायां ३, ॐ ह्रीं सर्वसाधुभ्यः स्वाहा उत्तरदिग्दले ४, तथैव विदिक्षु दर्शनादीनि चत्वारि पदानि ध्यायत, तत्तल्लिखनविधिस्त्वयं--ॐ ह्रीं दर्शनाय स्वाहा आग्नेयकोणे १, ओं ह्रीं ज्ञानाय स्वाहा नैर्ऋत्यां २, ॐ ह्रीं चारित्राय स्वाहा वायव्ये ३, ॐ ह्रीं तपसे स्वाहा ईशानकोणे ४, अनेन क्रमेण लिखेत्, एवमष्टदलं प्रथमवलयम् ॥१९७॥ प्रथमवलयबाह्यतो मण्डलाकारं षोडशदलं न्यस्येत्, तत्र द्वितीयवलये अष्टसु एकान्तरितदिग्दलेषु सानाहतान्-अनाहतबीजसहितान् अष्टौ वर्गान् अ, क,च, ट, त, प, य, श, रूपान् क्रमेण लिखित्वा यूयं स्मरत, तत्र प्रथमवर्गे षोडश वर्णाः कवर्गादिषु पञ्चसु प्रत्येकं पञ्च पञ्च वर्णाः, अन्तिमवर्गद्वये प्रत्येकं चत्वारो वर्णाः, ततोऽष्टसु वर्गाणामन्तरदलेषु परमेष्ठिपदानि ॐ नमो अरिहंताणमित्येवंरूपाणि ध्यायेत, अष्टस्वपि अन्तरदलेषु ॐ नमो अरिहंताणं इत्येवं लिखेदित्यर्थः । एवं द्वितीयवलयम् ॥ १९८ ॥

तइअवलएऽवि अडदिसि, दिप्पंतअणाहएहिं अंतरिए । पायाहिणेण तिहिपंतिआहिं झाएह लद्धिपए ॥ १९९ ॥
ते पणवबीअअरिहं, नमोजिणाणंति एवमाईआ । अडयालीसं णेआ, संमं सुगुरूवएसेणं ॥ २०० ॥
तं तिगुणेणं माया--बीएणं सुद्धसेयवण्णेणं । परिवेढिऊण परिहीइ, तस्स गुरुपायए नमह ॥ २०१ ॥

तृतीयवलयेऽपि अष्टसु दिक्षु अष्टावनाहतान् लिखेत् ततो द्वयोर्द्वयोरन्तरे द्वे द्वे लब्धिपदे एवमष्टस्वप्यन्तरेषु षोडश लब्धिपदानि प्रथमपङ्क्तौ एवं षोडशैव द्वितीयपङ्क्तौ एवमेव तृतीयपङ्क्तौ इत्थं दीप्यमानैरष्टभिरनाहतैरन्तरितानि-व्यवहितानि प्रादक्षिण्येन तिसृभिः पङ्क्तिभिः-श्रेणिभिरष्टचत्वारिंशल्लब्धिपदानि यूयं ध्यायत ॥ १९९ ॥ ते इति प्राकृतत्वान्नपुंसकस्य पुंस्त्वं, तानि लब्धिपदानि प्रवण-ॐकारो बीजं-ह्रीङ्कारोऽर्हमिति सिद्धिबीजं एतत्पूर्वकं नमो जिणाणमितिपदं ॐ ह्रीं अर्हं नमोजिणाणं इत्येवमादीनि अष्टचत्वारिंशत्सङ्ख्यानि सम्यक् सुगुरोरुपदेसेन ज्ञेयानि, एतेषां नामानि माहात्म्यानि च लब्धिकल्पादवसेयानि, इह त्वाराधनविधिं विना पुस्तकलिखने दोष इति न लिखितानि ॥ २०० ॥ तत्पीठादि लब्धिपदान्तं त्रिगुणेन शुद्धश्वेतवर्णेन मायाबीजेन-ह्रीङ्कारेण परिवेष्ट्य परितः-समन्ताद्वेष्टयित्वा तस्य परिधौ गुरुपादुकाः-गुरुपादन्यासान् यूयं नमत । अत्रायं भावः--सर्वयन्त्रस्योर्ध्वे ह्रीङ्कारं विलिख्य तस्य ईकारात्सर्वयन्त्रपरिक्षेपरूपां रेखां त्रिर्वालयित्वा चतुर्थरेखार्द्धप्रान्ते क्रौँ इत्यक्षरं लिखेत्, तस्य च परिधौ अष्टौ गुरुपादुकाः, पादुकाशब्दो यद्यपि नामकोशे उपानद्वाचक उक्तः, तथापि रूढ्या पादन्यासार्थोऽपि बोध्यः, बहुस्थानेषु तथा दर्शनात् ॥ २०१ ॥

 



अरिहं सिद्धगणीणं, गुरुपरमादिट्ठणंतसुगुरूणं । दुरणंताण गुरूण य, सपणवबीयाओ ताओ य ॥ २०२ ॥
रेहादुगकयकलसा--गारामिअमंडलंव तं सरह । चउदिसि विदिसि कमेणं, जयाइजंभाइकयसेवं ॥ २०३ ॥
सिरिविमलसामिपमुहाहिट्ठायगसयलदेवदेवीणं । सुहगुरुमुहाओ जाणिअ, ताण पयाणं कुणह झाणं ॥ २०४ ॥

अथाष्टगुरुपादुका एवाह–अर्हतां पादुकाः १ सिद्धानां पादुकाः २ गणीनां–आचार्याणां ३ गुरूणां–पाठकानां ४ परमगुरूणां ५ अदृष्टगुरूणां ६ अनन्तगुरूणां ७ दुरणंताणंति–अनंतानंतगुरूणां च८ इत्येवमष्टानामपि ताः–पादुकाः सप्रणवबीजाः–प्रवणबीजाभ्यां सहिताः ॐन्हींयुता इत्यर्थः, ॐ न्हीं अर्हत्पादुकाभ्यो नमः इत्थं सर्वा अपि लिखेत् ॥ २०२ ॥ रेखाद्विकेन यन्त्रोर्ध्वभागाद्वाम-दक्षिणनिर्गतान्योऽन्यग्रथितप्रान्तरेखाद्विकेन कृतं यत्कलशाकारं अमृतमण्डलं तद्वत् सरत–कलशाकारं लिखेदित्यर्थः, किंविशिष्टं तत् ?–चतुर्दिक्षु विदिक्षु च क्रमेण जयादिकाभिः चतसृभिः जया १ विजया २ जयन्त्य ३ ऽपराजिताभिः ४ तथा जम्भादिभि-र्जम्भा १ षम्भा २ मोहा ३ गन्धाभिः ४ कृता सेवा यस्य तत्, तत्र जयादिकाश्चतस्रः क्रमेण पूर्वादिदिक्षु जम्भादिका आग्नेय्या-दिपु विदिक्षु लिखेत् ॥ २०३ ॥ श्रीविमलस्वामीति नाम्ना सौधर्मदेवलोकवासी श्रीसिद्धचक्रस्याधिष्ठायकः तत्प्रमुखा येऽधिष्ठायका सकलाः–समस्ता देवा देव्यश्चक्रेश्वर्याद्याः तासां ध्यानं सुगुरुमुखात् ज्ञात्वा 'ताण'त्ति तत्सम्बन्धिनां 'पयाणं'ति मन्त्रपदानां ध्यानं यूयं कुरुत, एतेषां नामानि कलशाकारस्योपरि सर्वतो लिखेत्, ॐ न्हीं विमलस्वामिने नमः इत्यादि लिखेदित्यर्थः ॥२०४॥ 

तं विज्जादेविसासण--सुरसासणदेविसेविअदुपासं । मूलगहं कंठणिहिं, चउपडिहारं च चउवीरं ॥ २०५ ॥
दिसिवालखित्तवालेहिं सेविअं धरणिमंडलपइट्ठं । पूयंताण नराणं, नूणं पूरेइ मणइट्ठं ॥ २०६ ॥

अथ तमित्यादि गाथायुग्मस्य व्याख्या, तत् सिद्धचक्रं कर्तृ पूजयतां नराणां नूनं--निश्चितं मनइष्टं–मनसोऽभीष्टं पूरयति, इति द्वितीयगाथान्त्यपादद्वयेन सम्बन्धः, किंविशिष्टं तत् ?–विद्यादेव्यो–रोहिण्याद्याः षोडश, शासनसुरा गोमुखयक्षादयः चतुर्विंशतिः, शासनदेव्यश्चक्रेश्वर्याद्याः चतुर्विंशतिरेव, ततो विद्यादेवीभिः शासनदेवीभिश्च सेवितौ द्वौ पार्श्वौ–वामदक्षिणौ यस्य तत्, पुनः कीदृशं ?–'मूलगहं'ति मूले–कलशस्य मूले ग्रहाः–सूर्यादयो यस्य तत्, तथा कण्ठे–गलस्थाने निधयो नवसङ्ख्याका नैसर्प्पकाद्या आगमप्रसिद्धा यस्य तत्, तद्यथा–"नैसर्प्पः १ पाण्डुकश्चाथ, २ पिङ्गलः ३ सर्वरत्नकः ४। महापद्मः ५ काल ६ महाकालौ, ७ माणव ८ शङ्खकौ ९ ॥ १ ॥" तथा–चत्वारः प्रतीहारा–द्वारपालाः कुमुदांजनवामनपुष्पदन्ताख्या यस्य तत्तथा, चत्वारो वीरा मणिभद्रपूर्णभद्रकपिल-पिङ्गलाख्या यस्य तत्, तत्र विद्यादेव्यः षोडशापि ॐ न्हीं रोहिण्यै नमः इत्यादि यन्त्रपरितो लिखेत्, तथा शासनसुरान् चक्रस्य दक्षिणदिशि लिखेत्, शासनदेवीः अथ वामदिशि लिखेत्, तथा–कलशाकारचक्रस्य मूले पतग्रहाऽधः ॐ आदित्याय नम इत्यादीनि नवग्रहाणां नामानि लिखेत्, कण्ठे च वामदक्षिणतो नवापि कलशान् तदुपरि ॐ नैसर्प्पकाय नम इत्यादि लिखेत्, तथा चतसृषु दिक्षु क्रमेण कुमुदां १ जन २ वामन ३ पुष्पदन्तान् ४ लिखेत्, तथा माणभद्रादींश्चतुरो वीरानपि एवं दिक्षु लिखेत्, 'दिसिवाल'त्ति दिक्पालैर्दशभिरिन्द्राग्नियमनैर्ऋतवरुणवायुकुबेरेशानब्रह्मनागनामभिः क्षेत्रपालेन च प्रसिद्धेन सेवितं पुनर्द्धरणीमण्डलप्रतिष्ठं–पृथ्वी-

एयं च सिद्धचक्कं, कहिअं विज्जाणुवायपरमत्थं । नाएण जेण सहसा सिज्झंति महंतसिद्धिओ ॥ २०७॥
एयं च विमलधवलं, जो झायइ सुक्कजाणजोएण । तवसंजमेण जुत्तो, सो पावइ निज्जरं विउलं ॥ २०८ ॥
अक्खयसुक्खो मुक्खो, जस्स पसाएण लब्भए तस्स । झाणेणं अन्नाओ, सिद्धीओ हुंति किं चुज्जं ? ॥ २०९ ॥
एयं च परमतत्तं, परमरहस्सं च परममंतं च । परमत्थं परमपयं, पन्नत्तं परमपुरिसेहिं ॥ २१० ॥

पीठे स्थितमित्यर्थः, तत्र दशसु दिक्पालेषु अष्टौ दिक्पालान् पूर्वादिक्रमेण लिखेत् ॐ इन्द्राय नम इत्यादि, ऊर्ध्वं तु ओँ ब्रह्मणे-नमः अधः ॐ नागाय नमः, निजदक्षिणनागकोणे ॐ क्षेत्रपालाय नमः इति लिखेत्, अस्य लिखने सम्यग्विधिश्चास्याम्नायविन्मुखाद्यथालिखितचक्राद्वाऽवसेयः ॥२०५॥२०६॥ एतच्च सिद्धचक्रं विद्यानुवादो-दशमं पूर्वं तस्य परमार्थरूपं-रहस्यभूतमित्यर्थः, येन ज्ञातेन सहसा-सद्यो महत्यः सिद्धयो-अणिमाद्याः सिद्ध्यन्ति ॥ २०७ ॥ एतच्च विमलं-निर्मलं अत एव धवलं-उज्ज्वलं श्रीसिद्धचक्रं यः पुमान् शुक्लध्यानयोगेन-उज्ज्वलध्यानव्यापारेण ध्यायति स विपुलां-विस्तीर्णां निर्जरां प्राप्नोति बहुकर्मक्षयं करोतीत्यर्थः, कीदृशः सः ?-तपःसंयमाभ्यां युक्तः ॥ २०८ ॥ अक्षयं सुखं यस्मिन् स ईदृशो मोक्षो यस्य श्रीसिद्धचक्रस्य प्रसादेन प्राणिभिर्लभ्यते तस्य ध्यानेन अन्याः सिद्धयो भवन्ति, तत्र किञ्चोद्यं-किमाश्चर्यमित्यर्थः ॥ २०९ ॥ एतच्च परमतत्त्वं-उत्कृष्टं तत्त्वं च पुनः परमं रहस्यं-गोप्यं च पुनः परमो मन्त्रः पुनः परमार्थः पुनः परमपदं परमपुरुषैर्भगवद्भिः प्रज्ञप्तं-प्ररूपितम् ॥ २१० ॥

तत्तो तिजयपसिद्धं, अट्ठमहासिद्धिदायगं सुद्धं । सिरिसिद्धचक्कमेअं, आराहह परमभत्तीए ॥ २११ ॥
खंतो दंतो संतो, एयस्साराहगो नरो होइ । जो पुण विवरीयगुणो, एयस्स विराहगो सो उ ॥ २१२ ॥
तम्हा एयस्सारा-हगेण एगंतसंतचित्तेणं । निम्मलसीलगुणेणं, मुणिणा गिहिणा वि होयव्वं ॥ २१३ ॥
जो होइ दुट्ठचित्तो, एयस्साराहगोवि होऊण । तस्स न सिज्झइ एयं, किंतु अवायं कुणइ नूणं ॥ २१४ ॥
जो पुण एयस्सारा-हगस्स उवरिंमि सुद्धचित्तस्स । चिंतइ किंपि विरूवं, तं नूणं होइ तस्सेव ॥ २१५ ॥

ततस्तस्मात्कारणात् भो भो भव्याः ! त्रिजगति-लोकत्रये प्रसिद्धम्, अणिमाद्यष्टमहासिद्धिदायकं शुद्धं-निर्म्मलं एतत् श्रीसिद्धचक्रं परमभक्त्या यूयं आराधयत-सेवध्वम् ॥२११॥ अथैतस्य यः आराधको भवति तत्स्वरूपमाह-क्षान्तः-क्षमायुक्तः दान्तो-जितेन्द्रियः शान्तो-जितमानसविकारः ईदृशो नरो-मनुष्य एतस्य-सिद्धचक्रस्य आराधको भवति, यः पुनः विपरीता गुणा यस्मिन् स विपरीतगुणः कामक्रोधादियुक्त इत्यर्थः, स तु पुमान् एतस्य विराधको भवति ॥ २१२ ॥ तस्मात्कारणात् एतस्याराधकेन मुनिना-साधुना गृहेण-गृहस्थेनापि च ईदृशेन भवितव्यं, कीदृशेन ? इत्येतदाह-एकान्तेन-निश्चयेन शान्तं-विकाररहितं चित्तं यस्य स तेन, पुनर्निर्म्मलः शीलगुणो यस्य स तेन ॥२१३॥ यः पुमान् एतस्याराधकोऽपि भूत्वा दुष्टं चित्तं यस्य स दुष्टचित्तो भवति तस्य पुंस एतत् श्रीसिद्धचक्रं न सिद्ध्यति, किन्तु नूनं-निश्चितं अपायं-कष्टं करोति ॥२१४॥ शुद्धं चित्तं यस्य स शुद्धचित्तस्तस्य एतस्याराधकस्य पुंस उपरि कोऽपि दुष्टः किमपि विरूपं-अशुभं चिन्तयति, तद्विरूपं नूनं-निश्चितं तस्यैव विरूपचिन्तकस्यैव भवति ॥२१५॥

एएण कारणेणं, पसन्नचित्तेण सुद्धसीलेण । आराहणिज्जमेअं, सम्मं तवकम्मविहिपुव्वं ॥ २१६ ॥
आसोअसेअअट्ठमि–दिणाओ आरंभिऊणमेयस्स । अट्ठविहपूयपुव्वं, आयामे कुणह अट्ठ दिणे ॥ २१७ ॥
नवमंमि दिणे पंचा–मएण ण्हवणं इमस्स काऊणं । पूयं च वित्थरेणं, आयंबिलमेव कायव्वं ॥ २१८ ॥
एवं चित्तेवि तहा, पुणो पुणोऽट्ठाहियाण नवगेणं । एगासीए आयं--बिलाण एयं हवइ पुन्नं ॥ २१९ ॥

एतेन कारणेन प्रसन्नं–निर्म्मलं चित्तं यस्य स तेन तथा शुद्धं शीलं यस्य स तेन पुरुषेण एतत् सिद्धचक्रं सम्यक् तपःकर्मविधिपूर्वं आराधनीयं, तपःकर्म–आचामाम्लरूपं विधिः–पूजनध्यानादिसम्बन्धी तत्पूर्वकमित्यर्थः ॥ २१६ ॥ आश्विनश्वेताष्टमीदिनात्–आश्विनसुद्यष्टमीदिवसात् आरभ्य एतस्य–श्रीसिद्धचक्रस्य अष्टविधपूजापूर्वं–अष्टप्रकारां पूजां विधाय इत्यर्थः, अष्ट दिनानि यावदहो भव्या आचामाम्लानि तपांसि यूयं कुरुत, यद्यपि मूलविधिनाऽष्टमीदिनादारभ्यैतत्तपः प्रोक्तमस्ति, परं साम्प्रतं तु पूर्वाचार्याचरणातः सप्तमीदिनात् क्रियमाणमस्तीति ज्ञेयम् ॥ २१७ ॥ नवमे दिनेऽस्य–श्रीसिद्धचक्रस्य पञ्चामृतेन–दधिदुग्धघृतजलशर्करास्वरूपेण स्नपनं कृत्वा च पुनः विस्तरेण पूजां कृत्वा आचामाम्लमेव कर्त्तव्यम् ॥ २१८ ॥ एवं चैत्रेऽपि कर्त्तव्यं तथा–तेन प्रकारेण पुनः पुनरष्टाह्निकानां नवकेन आचामाम्लानामेकाशीत्याचामाम्लैरित्यर्थः, एतत्तपःकर्म पूर्णं भवति ॥ २१९ ॥

एयंमि कीरमाणे, नवपयझाणं मणंमि कायव्वं । पुन्ने य तवोकम्मे, उज्जमणंपि विहेयव्वं ॥ २२० ॥
एअं च तवोकम्मं, संमं जो कुणइ सुद्धभावेणं । सयलसुरासुरनरवर--रिद्धीउ न दुल्लहा तस्स ॥ २२१ ॥
एयंमि कए न हु दुट्ठकुट्ठखयजरभगंदराईआ । पहवंति महारोगा, पुव्वुप्पन्नावि नासंति ॥ २२२ ॥
दासत्तं पेसत्तं, विकलत्तं दोहगत्तमंधत्तं । देहकुलजुंगियत्तं, न होइ एयस्स करणेणं ॥ २२३ ॥
नारीणवि दोहग्गं, विसकन्नत्तं कुरंडरंडत्तं । वंझत्तं मयवच्छ--त्तणं च न हवेइ कइयावि ॥ २२४ ॥

एतस्मिन्तपसि क्रियमाणे मनसि नवपदध्यानं कर्त्तव्यं, नवपदानां जापश्चात्र जघन्यतस्त्रयोदशसहस्राणीति वृद्धाः, च पुनस्तपःकर्मणि पूर्णे सति उद्यापनमपि विधातव्यं–कर्त्तव्यं हु इति निश्चयेन ॥२२०॥ यः प्राणी एतच्च सम्यक्–समीचीनं तपःकर्म्म-तपोऽनुष्ठानं शुद्धभावेन करोति तस्य–प्राणिनः सकलसुरासुरनरवराणां ऋद्धयः–सम्पदो न दुर्लभाः–सुलभा एवेत्यर्थः ॥ २२१ ॥ एतस्मिन्तपःकर्मणि कृते सति दुष्टकुष्ठ १ क्षय २ ज्वर ३ भगन्दरा ४ द्या महारोगा नैव प्रभवन्ति–नैवोत्पद्यन्ते पूर्वोत्पन्ना रोगा अपि नश्यन्ति॥२२२॥एतस्य तपसः करणेन कर्तुर्दासत्वं न भवति, तथा प्रेष्यत्वं–कर्मकरत्वं न भवति, एवं विकलत्वं–कलाहीनत्वं दुर्भगत्वं–लोकेऽनिष्टत्वं, अंधत्वं–गताक्षत्वं, देहजुंगितत्वं–शरीरदूषितत्वं कुलजुङ्गितत्वं–कुलदूषितत्वं एतानि न भवन्ति ॥ ३२३ ॥ स्त्रीणामपि एते दोषाः कदापि न भवन्ति, के एते इत्याह–दौर्भाग्यं–भर्त्राद्यनिष्टत्वं तथा विषकन्यात्वं एवं कुरण्डात्वं–कुलक्षणनारीत्वं रण्डात्वं–भर्तृविहीनत्वं वन्ध्यात्वं–निरपत्यत्वं मृतवत्सात्वं च एतानि (न) भवन्ति ॥ २२४ ॥

किं बहुणा जीवाणं, एयस्स पसायओ सयाकालं। मणवंछियत्थसिद्धी, हवेइ नत्थित्थ संदेहो ॥ २२५ ॥
एवं तेसिं सिरिसिद्ध–चक्कमाहप्पमुत्तमं कहिउं। सावयसमुदायस्सवि, गुरुणो एवं उवइसंति ॥ २२६ ॥
एएहिं उत्तमेहिं, लक्खिज्जइ लक्खणेहिं एस नरो। जिणसासणस्स नूणं, अचिरेण पभावगो होही ॥ २२७ ॥
तम्हा तुम्हं जुज्जइ, एसिं साहम्मिआण वच्छल्लं। काउं जेण जिणिंदेहिं वन्निअं उत्तमं एयं ॥ २२८ ॥
तो तुट्ठेहिं तेहिं, सुसावएहिं वरंमि ठाणंमि। ते ठाविऊण दिन्नं, धणकणवत्थाइयं सव्वं ॥ २२९ ॥

किं बहुनोक्तेन जीवानां एतस्य प्रसादतः सदाकालं–सर्वस्मिन्नपि काले मनोवाञ्छितार्थस्य सिद्धिर्भवति नास्त्यत्र सन्देहः–संशयः ॥ २२५ ॥ एवममुना प्रकारेण तयोः श्रीपालमदनसुन्दर्योरग्रे उत्तमं–प्रधानं श्रीसिद्धचक्रस्य माहात्म्यं कथयित्वा श्रावकसमुदायस्य–श्रद्धालुसंघस्यापि गुरवः एवं–वक्ष्यमाणप्रकारेण उपदिशन्ति ॥ २२६ ॥ एतैः उत्तमैर्लक्षणैः–चिह्नैर्लक्ष्यते–ज्ञायते, एष नरो नूनं–निश्चितं अचिरेण–स्वल्पकालेन जिनशासनस्य प्रभावक–उद्दीपनकृत् भविष्यतीति ॥२२७॥ तस्माद् युष्माकं एषां साधर्म्मिकाणां–अनयोः साधर्म्मिकयोर्वात्सल्यं कर्तुं युज्यते, येन कारणेन जिनेन्द्रैः एतत्–साधर्म्मिकवात्सल्यं उत्तमं–प्रधानं वर्णितमस्ति ॥ २२८ ॥ ततस्तुष्टैः तैः–सुश्रावकैः ते–श्रीपालमदनसुन्दर्यौ वरे–प्रधाने स्थाने गृहाद्याश्रये स्थापयित्वा धनधान्यवस्त्रादिकं सर्वं वस्तुजातं दत्तं ॥ २२९ ॥

न य तं करेइ माया, नेव पिया नेव बंधुवग्गो अ। जं वच्छल्लं साहम्मिआण सुस्सावओ कुणइ ॥ २३० ॥
तत्थ ठिओ सो कुमरो, मयणावयणेण गुरूवएसेणं। सिक्खेइ सिद्धचक्कप्पसिद्धपूआविहिं सम्मं ॥ २३१ ॥
अह अन्नदिणे आसोअ–सेअअट्ठमितिहीइ सुमुहुत्ते। मयणासहिओ कुमरो, आरंभइ सिद्धचक्कतवं ॥ २३२ ॥
पढमं तणुमणसुद्धिं, काऊण जिणालए जिणच्चं च। सिरिसिद्धचक्कपूयं, अट्ठपयारं कुणइ विहिणा ॥ २३३ ॥
एवं कयविहिपूओ, पच्चक्खाणं करेइ आयामं। आणंदपुलइअंगो, जाओ सो पढमदिवसे वि ॥ २३४ ॥

न च तद्वात्सल्यं माता करोति, नैव पिता–जनकः, नैव बन्धुवर्गश्च–भ्रातृसमुदायः करोति, यत्साधर्मिकाणां वात्सल्यं सुश्रावकः करोति ॥ २३० ॥ तत्र–तस्मिन्स्थाने स्थितः स कुमारो मदनसुन्दर्या वचनेन तथा गुरूपदेशेन श्रीसिद्धचक्रस्य प्रसिद्धं पूजाविधिं सम्यक् शिक्षति–अभ्यस्यति ॥२३१॥ अथानन्तरं–अन्यस्मिन् दिने आश्विनश्वेताष्टमीतिथौ–आश्विनसुद्यष्टम्यां शोभने मुहूर्त्ते मदनसुन्दरीसहितः श्रीपालकुमारः सिद्धचक्रतप आरभते–तत्प्रारम्भं करोतीत्यर्थः ॥२३२॥ प्रथमं तनोः–शरीरस्य मनसश्चान्तःकरणस्य शुद्धिं–निर्मलतां कृत्वा च पुनः जिनालये–जिनगृहे जिनार्चां–जिनप्रतिमापूजां कृत्वाऽष्टप्रकारीं श्रीसिद्धचक्रस्य पूजां विधिना करोति ॥ २३३ ॥ एवमुक्तप्रकारेण कृता विधिना पूजा येन स एवंविधः श्रीपाल आचामाम्लं प्रत्याख्यानं करोति, स श्रीपालकुमारः प्रथमदिवसेऽपि आनन्देन पुलकितरोमोद्गमयुतं अङ्गं यस्य स एवंविधो जातः ॥२३४॥

॥ २८ ॥

बीअदिणे सविसेसं, संजाओ तस्स रोगउवसामो । एवं दिवसे दिवसे, रोगखए वड्ढए भावो ॥ २३५ ॥
अह नवमे दिवसंमी, पूअं काऊण वित्थरविहीए । पंचामएण ण्हवणं, करेइ सिरिसिद्धचक्कस्स ॥ २३६ ॥
ण्हवणूसवंमि विहिए, तेणं संतीजलेण सव्वंगं । संसित्तो सो कुमरो, जाओ सहसत्ति दिव्वतणू ॥ २३७ ॥
सव्वेसिं संजायं, अच्छरिअं तस्स दंसणे जाव । ताव गुरू भणइ अहो, एयस्स किमेयमच्छरिअं ? ॥ २३८ ॥
इमिणा जलेण सव्वे, दोसा गहभूअसाइणीपमुहा । नासंति तक्खणेणं, भविआणं सुद्धभावाणं ॥ २३९ ॥

द्वितीयदिने तस्य–श्रीपालकुमारस्य सह विशेषेणेति–सविशेषं रोगस्योपशमः सञ्जातः, एवममुना प्रकारेण दिवसे दिवसे–दिने दिने रोगस्य क्षये सति भावो वर्द्धते—शुभपरिणामो वृद्धिं यातीत्यर्थः ॥ २३५ ॥ अथ नवमे दिवसे विस्तरविधिना श्रीजिन-पूजां कृत्वा पंचामृतेन–प्रागुक्तस्वरूपेण श्रीसिद्धचक्रस्य—यन्त्रराजस्य स्नपनं करोति ॥ २३६ ॥ श्रीसिद्धचक्रस्य स्नपनोत्सवे–स्नात्रमहोत्सवे विहिते–कृते सति तेन शान्तिजलेन सर्वस्मिन् अंगे संसिक्तः स कुमारः सहसा इत्यकस्मादेव दिव्या-अद्भुता–मनोज्ञा तनुः—कायो यस्य स दिव्यतनुर्जात इतिनिपातोऽवधारणे ॥ २३७॥ तादृग्रूपस्य तस्य–श्रीपालस्य दर्शने सति यावत् सर्वेषां लोकानामाश्चर्यं सञ्जातं तावद्गुरुर्भणति, अहो लोका ! एतस्य किमेतदाश्चर्यं ?, न किमपीत्यर्थः ॥ २३८ ॥ अनेन शांति-जलेन शुद्धभावानां–निर्मलमनःपरिणामानां भव्यानां गृहभूतशाकिनीप्रमुखाः सर्वेऽपि दोषास्तत्क्षणेन—तत्कालमेव नश्यन्ति—प्रणाशमुपयान्ति ॥ २३९ ॥

खयकुट्ठजरभगंदर–भूया वाया विसूइआईआ । जे केवि दुट्ठरोगा, ते सव्वे जंति उवसामं ॥ २४० ॥
जलजलणसप्पसावय–भयाइं विसवेअणा उ ईईओ । दुपयचउप्पयमारीउ, नेव पहवंति लोअंमि ॥ २४१ ॥
वंझाणवि हुंति सुया, निंदूणवि नंदणा य नंदंति । फिट्टंति पुट्टदोसा, दोहग्गं नासइ असेसं ॥ २४२ ॥
इच्चाइ पहावं निसु–णिऊण दट्ठूण तं च पच्चक्खं । लोआ महप्पमोआ, संतिजलं लिंति सविसेसं ॥ २४३ ॥

क्षयकुष्ठज्वरभगन्दरभूताः–क्षयकुष्ठादिरूपा इत्यर्थः, तथा वाता–वायुरोगाः पुनः विसूचिकादिका–अजीर्णादयो ये केऽपि दुष्टरोगाः ते सर्वे उपशामं यांति–उपशाम्यन्तीत्यर्थः॥२४०॥ जलं–पानीयं ज्वलनोऽग्निः सर्पः प्रतीतः श्वापदाः सिंहादयस्तेभ्यो यानि भयानि तथा विषवेदना—विषजन्याः पीडा तथा ईतयः—उत्पाताः तथा द्विपदचतुष्पदानां–मनुष्यतिरश्चां मार्यो–मरको-पद्रवाः लोके नैव प्रभवन्ति, नैव प्रवर्त्तन्ते इत्यर्थः ॥ २४१ ॥ वन्ध्यास्त्रीणामपि सुताः–पुत्राः भवन्ति, च पुनः निन्दूनां–मृतवत्सास्त्रीणामपि नन्दनाः–पुत्रा नन्दन्ति—संवर्द्धन्ते इत्यर्थः, तथा उदरदोषा अपि नश्यन्ति, पुनरशेषं—समस्तं दौर्भाग्यं नश्यति ॥ २४२ ॥ श्रीसिद्धचक्रस्नपनजलस्य इत्यादि प्रभावं श्रुत्वा च पुनः प्रत्यक्षं तं प्रभावं दृष्ट्वा लोका महान् प्रमोदो–हर्षो येषां ते महाप्रमोदाः सन्तो विशेषेण सहेति सविशेषं तत् शान्तिजलं—स्नपनपानीयं गृह्णन्ति ॥ २४३ ॥

तं कुट्ठिपेयडं पि हु, तज्जलसंसित्तगत्तमचिरेण । उवसंतप्पायरुअं, जायं धम्मंमि सरुई य ॥ २४४ ॥
मयणा पइणो निरुवम-रूवं च निरूविऊण साणंदा । पभणेइ पइं सामिअ !, एसो सव्वो गुरुपसाओ ॥ २४५ ॥
माअपिअसुअसहोअर--पमुहावि कुणंति तं न उवयारं । जं निक्कारणकरुणा--परो गुरू कुणइ जीवाणं ॥ २४६ ॥
तं जिणधम्मगुरूणं, माहप्पं मुणिय निरुवमं कुमरो । देवे गुरुंमि धम्मे, जाओ एगतभत्तिपरो ॥ २४७ ॥

तत्कुष्ठिपेटकं-कुष्ठरोगिवृन्दमपि तज्जलेन-शान्तिजलेन संसिक्तं गात्रं-शरीरं यस्य तत्तादृशं सत् अचिरेण-तत्कालं उपशान्त-प्राया-प्रायेणोपशान्ता रुजा-रोगा यस्य तत् उपशान्तप्रायरुजं जातं, च पुनः धर्मे-धर्मविषये सह रुच्याऽभिलाषेण वर्त्तते इति सरुचि सञ्जातम् ॥ २४४ ॥ च पुनः, मदनसुन्दरी पत्युः-स्वभर्तुर्निरुपमं-अत्यद्भुतं रूपं निरूप्य-दृष्ट्वा सानन्दा-आनन्दसहिता सती पतिं-श्रीपालं प्रभणति-कथयति, हे स्वामिन् ! एष सर्वो गुरुप्रसादोऽस्ति ॥ २४५ ॥ माता पिता सुताः-पुत्राः सहोदरा-भ्रातरः प्रमुखग्रहणादन्येऽपि स्वजना एते सर्वेऽपि तं उपकारं न कुर्वन्ति यं जीवानां उपकारं निष्कारणः-कारणवार्जिता या करुणा-दया सा परा-प्रधानं यस्य स एवंविधो गुरुः करोति ॥ २४६ ॥ जिनश्च धर्म्मश्च गुरुश्च जिनधर्मगुरवस्तेषां तन्निरुपमं-सर्वोत्कृष्टं माहात्म्यं-प्रभावं मुणित्वा-ज्ञात्वा कुमारः-श्रीपालो देवे-वीतरागे गुरौ-शुद्धसाधौ धर्मे च-सर्वज्ञप्रणीते एकान्तेन-निश्चयेन भक्तिपरः-सेवातत्परो जातः ॥ २४७ ॥

धम्मपसाएणं चिय जह जह माणंति तत्थ सुक्खाइं-ते दंपईउ तह तह, धम्मंमि समुज्जमा निच्चं॥२४८॥
अह अन्नया उ ते जिणहराउ जा नीहरंति ता पुरओ । पिक्खंति अद्धवुड्ढं एगं नारिं समुहमिंतिं ॥२४९ ।
तं पणमिऊण कुमरो, पभणइ रोमंचकंचुइज्जंतो । अहो अणब्भा वुट्ठी संजाया जणणिदंसणओ॥२५०॥
मयणावि हु पियजणणिं, नाउं जा नमइ ता भणइ कुमरो। अम्मो! एस पहावो सव्वो इमीए तुह ण्हुहाए ।

तत्रोज्जयिन्यां तौ दंपती- स्त्रीभर्तारौ धर्मप्रसादेनैव यथा यथा सौख्यानि मानयतः-अनुभवतस्तथा तथा धर्मे-सद्धर्म-विषये नित्यं-निरन्तरं सं-सम्यग् समीचीन उद्यमो ययोस्तौ समुद्यमौ भवत इति शेषः ॥२४८॥ अथ-अनन्तरं तौ स्त्रीभर्त्तारौ अन्यदा-अन्यस्मिन् दिने तु इति विशेषे यावत् जिनगृहात् बहिर्निस्सरतस्तावत् पुरतः-अग्रत एकां अर्द्धवृद्धां नारीं-स्त्रियं सम्मुखं आयान्तीं- आगच्छंतीं प्रेक्षेते-विलोकयतः ॥ २४९ ॥ तं स्त्रियं प्रणम्य श्रीपालकुमारो रोमाञ्चकंचुकितो-रोमोद्गम-संयुक्तः सन् प्रभणति-कथयति, किं कथयतीत्याह- अहो इति आश्चर्येऽद्य जनन्या-मातुर्दर्शनात् अनभ्रा-वार्दलरहिता वृष्टिः सञ्जाता वार्दलैर्विनैव मेघो ववर्षेत्यर्थः ॥ २५० ॥ मदनसुन्दर्यपि प्रियस्य-भर्त्तुर्जननीं-मातरं ज्ञात्वा यावत्तां नमति तावत्कु-मारो भणति, अम्मोत्ति:- हे अम्ब हे मातः एषः--प्रत्यक्षं विलोक्यमानः सर्वोऽपि अस्यास्तव स्नुषाया-वध्वाः प्रभावोऽस्तीति शेषः ॥ २५१ ॥

साणंदा सा आसीसदाणपुव्वं सुयं सुण्हं च । अभिनंदिऊण पभणइ, तइयाऽहं वच्छ ! तं मुत्तुं ॥२५२॥
कोसंबीए विज्जं, सोऊणं जाव तत्थ वच्चामि । ता तत्थ जिणाययणे, दिट्ठो एगो मुणवरिंदो ॥२५३॥
खंतो दंतो संतो, उवउत्तो गुत्तिमुत्तिसंजुत्तो । करुणारसप्पहाणो, अवितहनाणो गुणनिहाणो॥२५४॥
धम्मं वागरमाणो, पत्थावे नमिय सो मए पुट्ठो । भयवं ! किं मह पुत्तो, कयावि होही निरुयगत्तो ?२५५

सा कुमारमाता सानन्दा–सहर्षा सती आशीर्दानपूर्वकं सुतं च पुत्रवधूं च स्नुषां अभिनन्द्य प्रशस्य प्रभणति–स्ववृत्तान्तं कथयति, तथाहि–हे वत्स ! तदा–तस्मिन् कालेऽहं त्वां अत्र मुक्त्वा— ॥ २५२ ॥ कौशांब्यां नगर्यां सर्वरोगनिवारकं वैद्यं श्रुत्वा यावत्तत्र व्रजामि–गच्छामि तावत्तत्र नगर्यां जिनायतने–जिनगृहे एको मुनिवरेन्द्रो दृष्टः । कीदृशो मुनीन्द्रः इत्याह ॥२५३॥क्षान्तः–क्षमायुक्तो दान्तो–जितेन्द्रियः शान्तः–शान्तरसयुक्तः उपयुक्तः–उपयोगवान् गुप्तिः–मनोवाक्कायनिरोधः, मुक्तिः–निर्लोभता ताभ्यां संयुतः पुनः करुणारसप्रधानः यस्य स तथोक्तः, पुनरवितथं–सत्यं ज्ञानं यस्य स तथोक्तः, अत एव गुणानां निधानं–निधिः ॥ २५४ ॥ एवंविधः स मुनीन्द्रो धर्मं व्यागृणन्–कथयन् प्रस्तावे अवसरे मया नत्वा–प्रणम्य पृष्टः, हे भगवन् ! किमिति प्रश्ने मम पुत्रः कदापि निष्क्रान्तं रुजाया इति निरुजं निरुजं गात्रं–शरीरं यस्य स रोगरहितकायो भविष्यति ? ॥ २५५ ॥

तेण मुणिंदेणुत्तं, भद्दे ! सो तुज्झ नंदणो तत्थ । तेणं चिय कुट्ठियपेडएण दट्ठूण संगहिओ ॥२५६॥
विहिओ उंबरराणुत्ति, नियपहू लद्धलोयसम्माणो । संपइ मालवनरवइधूयापाणप्पिओ जाओ २५७
रायसुयावयणेणं, गुरूवइट्ठं स सिद्धवरचक्कं । आराहिऊण सम्मं संजाओ कणयसमकाओ ॥२५८॥
सो य साहम्मिएहिं, पूरियविहवो सुधम्मकम्मपरो । अच्छइ उज्जेणीए, घरणीइ समन्निओ सुहिओ २५९

तदा तेन मुनीन्द्रेणोक्तं, हे भद्रे ! स तव नन्दनः–पुत्रः तत्रोज्जयिन्यां तेनैव कुष्ठिकपेटकेन–कुष्ठिनां वृन्देन दृष्ट्वा सङ्गृहीतः, ततः समादाय स्वपार्श्वे रक्षित इत्यर्थः ॥ २५६ ॥ ततस्तैः स त्वत्पुत्रः उम्बरराज इति नाम्ना निजप्रभुः–स्वस्वामी विहितः–कृतः, कीदृशः सः ?–लब्धः–प्राप्तो लोके सन्मानः– सत्कारो येन स तथोक्तः, सम्प्रति–अधुना त्वत्पुत्रो मालवनरपतेः–मालवदेशराजस्य या पुत्री मदनसुन्दरी तस्याःप्राणप्रियो–भर्त्ता जातोऽस्ति ॥२५७॥ स तव पुत्रो राजसुताया–नृपपुत्र्या मदनसुन्दर्य्या वचनेन गुरूपदिष्टं श्रीसिद्धवरचक्रं सम्यक् आराध्य कनकेन–सुवर्णेन समः–स्तुल्यः कायः–शरीरो यस्य स तथोक्तः स्वर्णवर्णदेहः सञ्जातोऽस्ति ॥२५८॥ स च त्वत्पुत्रो गृहिण्या–निजस्त्रिया समन्वितो–युक्तः सन् अधुना उज्जयिन्यामवतिष्ठते, कीदृशः सः ?–साधर्मिकैः पूरितो विभवः–स्वर्णादिद्रव्यं यस्य स तथोक्तः, पुनः कीदृशः ?–सुष्ठु–शोभनानि यानि धर्म्मकर्म्माणि पराणि–तानि प्रधानानि यस्य स पुनः सुखं जातमस्येति सुखितः ॥ २५९ ॥

 तं सोऊणं हरिसिअ-चित्ताऽहं वच्छ! इत्थ संपत्ता। दिट्ठोसि वहूसहिओ, जुण्हाइ ससिव्व कयहरिसो॥२६०॥ 
ता वच्छ ! तुमं वहुया-सहिओ जय जीव नंद चिरकालं। एसुच्चिअ जिणधम्मो, जावज्जीवं च मह सरणं ॥
 जिणरायपायपउमं, नमिऊणं वंदिऊण सुगुरुं च। तिन्निवि करंति धम्मं, सम्मं जिणधम्मविहिनिउणा २६२
ते अन्नदिणे जिणवर-पूअं काऊण अंगअग्गमयं। भावच्चयं करंता, देवे वंदंति उवउत्ता ॥२६३॥

तद्गुरुवचः श्रुत्वा हे वत्स ! अहं हर्षितचित्ता सती अत्र सम्प्राप्ता, 'हर्षितं चित्तं यस्याः सेति समासः' अधुना वध्वा सहितस्त्वं दृष्टोऽसि, कया सहितः क इव ?-ज्योत्स्नया-चन्द्रिकया सहितः शशी-चन्द्र इव, अत्र कुमारस्य चन्द्रेणौपम्यं वध्वास्तु ज्योत्स्नयेति, कीदृशस्त्वं?-कृतो हर्षो येन स तथोक्तः ॥ २६० ॥ तस्माद् हे वत्स ! त्वं वध्वा सहितश्चिरकालं-बहुकालं यावत् जय-सर्वोत्कर्षेण वर्त्तस्व, पुनः चिरकालं जीव-आयुष्मान् भव, पुनः चिरं नन्द-समृद्धिमान् भव, च पुनः एष एव जिनधर्मो यावज्जीवं मम शरणमस्ति ॥ २६१ ॥ ततस्ते त्रयोऽपि-जननीपुत्रवधूलक्षणा जीवा जिनराजस्य-जिनेन्द्रदेवस्य पादपद्मं-चरणकमलं नत्वा च पुनः सुगुरुं वन्दित्वा सम्यग् धर्मं कुर्वन्ति, कीदृशास्त्रयः?-जिनधर्मविधौ निपुणाः-चतुराः ॥ २६२ ॥ ते त्रयोऽपि अन्यस्मिन् दिने अङ्गाऽग्रमयीं जिनवरस्य पूजां कृत्वा, एतावता भगवतो अङ्गपूजां अग्रपूजां च विधाय, भावार्चां-भावपूजां कुर्वन्तः उपयुक्ताः संतो देवान् वन्दन्ते, अङ्गाग्रे प्रधाने अस्यामिति विग्रहः ॥२६३॥ ॥ ३२ ॥

इओ य-धूयादुहेण सा रुप्पसुंदरी रूसिऊण सह रन्ना। निअभायपुण्णपालस्स, मंदिरे अच्छइ ससोया ॥
वीसारिऊण सोअं, सणिअं सणिअं जिणुत्तवयणेहिं। जग्गिअचित्तविवेआ समागया चेइयहरंमि ॥२६५॥
जा पिक्खइ सा पुरओ, तं कुमरं देववंदणापउणं। निउणं निरुवमरूवं, पच्चक्खं सुरकुमारंव ॥२६६॥
तप्पुट्ठीइ ठिआओ, जणणीजायाउ ताव तस्सेव। दट्ठूण रुप्पसुंदरि, राणी चिंतेइ चित्तंमि ॥ २६७ ॥
ही एसा का लहुया वहुया दीसेइ मज्झ पुत्तिसमा। जाव निउणं निरिक्खइ उवलक्खइ ताव तं मयणं ॥

इतश्च-पुत्रीदुःखेन सा-रूप्यसुन्दरी राज्ञी राज्ञा सह रुषित्वा-रोषं कृत्वा निजभ्रातुः पुण्यपालस्य मन्दिरे सह शोकेन वर्त्तते इति सशोका सती अवतिष्ठते ॥२६४॥ सा रूप्यसुन्दरी शनैः शनैः शोकं विस्मार्य-निराकृत्य जिनोक्तवचनैः जागरितश्चित्ते विवेको यस्याः सा एवंविधा सती चैत्यगृहे-जिनमन्दिरे समागता ॥२६५॥ सा रूप्यसुन्दरी यावत् पुरतः-अग्रतस्तं कुमारं प्रेक्षते-पश्यति, कीदृशं तं ?-देववन्दनायां प्रगुणं-लग्नं पुनर्निपुणं-चतुरं पुनः प्रत्यक्षं सुरकुमारमिव निरुपमं-उपमावर्जितं रूपमाकृतिः सौन्दर्यं च यस्य स तम् ॥२६६॥ तावत्तस्य-कुमारस्य पृष्ठतः स्थिते तस्यैव कुमारस्य जननीजाये-मातृस्त्रीयो दृष्ट्वा रूप्यसुन्दरी राज्ञी चित्ते चिन्तयति, ।२६७॥ किं चिन्तयतीत्याह-हीति वितर्के एषा मम पुत्रीतुल्या लघ्वी वधूश्च का दृश्यते, इति विचिन्त्य यावत् निपुणं-सोपयोगं निरीक्ष्यते तावत्तां वधूं-मदनसुन्दरीं उपलक्षते-जानातीत्यर्थः॥२६८॥

नूणं मयणा एसा, लग्गा एयस्स कस्सवि नरस्स । पुट्ठीइ कुट्ठिअं तं मुत्तूणं चत्तसइमग्गा ॥ २६९ ॥
मयणा जिणमयनिउणा, संभाविज्जइ न एरिसं तीए। भवनाडयंमि अहवा, ही ही किं किं न संभवइ?॥
विहिअं कुले कलंकं, आणीअं दूसणं च जिणधम्मे । जीए तीइ सुयाए, न मुयाए तारिसं दुक्खं ॥२७१॥
जारिसमेरिस असमं-जसेण चरिएण जीवयंतीए । जायं मज्झ इमीए, धूयाइ कलंकभूयाए ॥२७२॥
एवं चिंतंती रुप्पसुंदरी दुक्खपूरपडिपुण्णा। करुणसरं रोयंती. भणेइ एयारिसं वयणं ॥२७३॥

ततः पुनरेवं चिन्तयति, नूनं-निश्चयेन एषा मदनसुन्दरी मत्पुत्री तं कुष्ठिनं पुरुषं मुक्त्वा-परिहृत्य त्यक्तः सतीमार्गो यया सा एवंविधा सती एतस्य कस्याऽपि नरस्य पुष्टौ लग्ना ज्ञायते इति शेषः ॥२६६॥ मदनसुन्दरी जिनमते निपुणा वर्त्तते, तया एतादृशं अकार्यकरणं न सम्भाव्यते, अथवा हीहीति अतिखेदे भवनाटके-संसारनाटके किं किं न सम्भवति?, सर्वमपि सम्भवति इत्यर्थः ॥२७०॥ यया कुले कलङ्कं-आनीतं च पुनः जिनधर्म्मे दूषणमानीतं तया सुतया-पुत्र्या मृतया तादृशं दुःखं न भवेत् ॥२१७॥ यादृशं दुःखं ईदृशेन असमंजसेन-अयोग्येन चरितेन-आचरणेन अनया कलङ्कभूतया पुत्र्या जीवन्त्या मम जातं-समुत्पन्नम् ॥२७२॥ एवममुना प्रकारेण चिन्तयन्ति, दुःखपूरेण-दुःखभरेण प्रतिपूर्णा भृता रूप्यसुन्दरी-राज्ञी करुणो-दीनः स्वरो यत्र कर्मणि तत् करुणस्वरं यथा स्यात्तथा रुदती एतादृशं वचनं भणति ॥ २७३ ॥

धिद्धी अहो अकज्जं, निवडउ वज्जं च मज्झ कुच्छीए। जत्थुप्पन्नावि विय-क्खणावि ही एरिसं कुणइ२७४
तं सोऊणं मयणा, जा पिक्खइ रुप्पसुंदरीजणणिं। रुयमाणिं ता नाओ तीए जणणीअभिप्पाओ॥ २७५॥
चिअवंदणं समग्गं, काऊणं मयणसुंदरी जणणिं। करवंदणेण वंदिअ, विअसिअवयणा भणइ एवं।२७६।
अम्मो ! हरिसट्ठाणे, कीस विसाओ विहिज्जए एवं ?। जं एसो नीरोगो, जाओ जामाउओ तुम्हं ॥२७७॥

अहो इत्याश्चर्ये एतत्कार्यं धिग् धिग् अस्तु, च पुनः मम कुक्षौ-उदरे वज्रं निपततु, यत्र-यस्मिन्कुक्षौ उत्पन्नाऽपि पुनर्विचक्षणाऽपि हीति खेदे ईदृशमकार्यं करोति ॥ २७४ ॥ तद्वचनं श्रुत्वा मदनसुन्दरी यावत् रूप्यसुन्दरीजननीं निजमातरं रुदन्तीं प्रेक्षते-विलोकयति तावत्तया-मदनसुन्दर्या जनन्या अभिप्रायो-मनोगतो वितर्को ज्ञातः ॥२७५॥ ततो मदनसुन्दरी समग्रां-सम्पूर्णां चैत्यवन्दनां कृत्वा जननीं-स्वमातरं कराभ्यां-हस्ताभ्यां यद्वन्दनं-नमस्कारस्तेन वन्दित्वा-नमस्कृत्य विकसितं-विकस्वरं वदनं-मुखं यस्याः सा एवंविधा सती एवं-वक्ष्यमाणं भणति ॥२७६॥ तथाहि-हे अम्ब-हे मातः हर्षस्थाने एवं विषादो-विषण्णता कथं विधीयते-कथं क्रियते ?, यद्-यस्मात्कारणात् एषः युष्माकं जामाता नीरोगो-रोगरहितो जातोऽस्ति अतोऽत्र हर्षो युक्त इति भावः ॥२७७॥

अन्नं च जं वियप्पह, तं जइ पुव्वाइ पच्छिमदिसाए। उग्गमइ कहवि भाणू, तहवि न एयं नियसुयाए॥
कुमरजणणीवि जंपइ, सुंदरि! मा कुणसु एरिसं चित्ते। तुज्झ सुआइ पभावा, मज्झ सुओ सुंदरो जाओ
धन्नासि तुमं जीए, कुच्छीए इत्थिरयणमुप्पन्नं। एरिसमसरिससीलप्पभावचिंतामणिसरिच्छं। २८०॥
हरिसवसेणं सा रु-प्पसुंदरी पुच्छए किमेअंति?। मयणावि सुविहिनिउणा, पभणइ एआरिसं वयणं॥

यत्पुनरन्यत् अकार्याचरणलक्षणं यूयं विकल्पयत-विचिन्तयत तदेतद्यदि पूर्वस्य दिशः सकाशात् पश्चिमदिशायां कथमपि भानुः-सूर्यः उद्गच्छति, तथापि निजसुतायाः सकाशान्नै तत् (सं)भवेत् ॥२७८॥ तदा कुमारस्य जनन्यपि जल्पति हे सुन्दरि! त्वं स्वकीये चित्ते ईदृशं विकल्पं मा कुरुष्व, यतस्तव सुतायाः प्रभावात् मम सुत एतादृक् सुन्दरो जातोऽस्ति ॥ २७९ ॥ हे सुन्दरि! त्वं धन्याऽसि यस्याः कुक्षौ ईदृशं स्त्रीरत्नं उत्पन्नं, कीदृशं? इत्याह-असदृशं-अनुपमं यच्छीलं-ब्रह्मचर्यं तस्य प्रभावेण चिन्तामणिसदृशं-चिन्तामणिरत्नतुल्यम्॥ २८० एतत् श्रुत्वा सा रूप्यसुन्दरीराज्ञी हर्षवशेन कुमारमातरं इति पृच्छति, किमेतत् कथमेष वृत्तान्त इत्यर्थः, तदा सुष्ठु निपुणा मदनसुन्दर्यपि एतादृशं वचनं प्रभणति-प्रकर्षेण कथयति ॥ २८१ ॥



चेइअहरंमि वत्ता-लावंमि कए निसीहिआभंगो। होइ तओ मह गेहे, वच्चह साहेमिमं सव्वं ॥२८२॥
तत्तो गंतूण गिहं, मयणाए साहिओ समग्गोवि। सिरिसिद्धचक्कमाहप्पसंजुओ नियवुत्तंतो ॥२८३॥
तं सोऊणं तुट्ठा, रुप्पा पुच्छेइ कुमरजणणिंपि। वंसुप्पत्तिं तुह नं-दणस्स सहि! सोउमिच्छामि२८४
पभणेइ कुमरमाया, अंगादेसंमि अत्थि सुपसिद्धा। वेरिहिं कयअकंपा, चंपानामेण वरनयरी ॥२८५॥

कीदृशमित्याह-चैत्यगृहे-जिनालये वार्त्तालापे कृते सति नैषेधिकीभङ्गो भवति, ततः-तस्मात्कारणात् यूयं मम गृहे व्रजत येन इमं सर्वं वृत्तान्तं कथयामि ॥२८२॥ ततो गृहं गत्वा मदनसुन्दर्या समग्रोऽपि निजकवृत्तान्तः कथितः, कीदृशो वृत्तान्तः?-श्रीसिद्धचक्रस्य यन्माहात्म्यं तेन संयुतो-युक्तः ॥२८३॥ तं-निजजामातुर्वृत्तान्तं श्रुत्वा तुष्टा सती रूप्यसुन्दरी कुमारजननीं अपि पृच्छति, कथमित्याह-हे सखि-हे सम्बन्धिनि तव नन्दनस्य-पुत्रस्य वंशोत्पत्तिं श्रोतुमिच्छामि-कस्मिन्वंशे उत्पत्तिः-वंशोत्पत्तिस्ताम् ॥२८४॥ अथ कुमारस्य माता प्रभणति, अङ्गाख्ये देशे सुतराम्-अतिशयेन प्रसिद्धा चम्पानाम्नी वरा-प्रकृष्टा नगरी अस्ति, कीदृशी सा?-वैरिभिः कृतोऽकम्पो यस्याः सा शत्रुभिरकृतकम्पेत्यर्थः ॥ २८५ ॥

तत्थ य अरिकरिसीहो, सीहरहो नाम नरवरो अत्थि। तस्स पिया कमलपहा, कुंकुणनरनाहलहुभइणी ॥
तीए अपुत्तिआए, चिरेण वरसुविणसूइओ पुत्तो । जाओ जणिआणंदो, वद्धावणयं च कारवियं २८७
पभणेइ तओ राया, अम्हमणाहाइ रायलच्छीए । पालणखमो इमो ता हवेउ नामेण सिरिपालो ॥
सो सिरिपालो बालो, जाओ जा वरिसजुयलपरियाओ । ता नरनाहो सूलेण, झत्ति पंचत्तमणुपत्तो ॥

तत्र च नगर्यां अरयो—वैरिण एव करिणो—गजास्तेषु सिंह इव [लायतसतारकेसात् अरिः] ईदृशः सिंहरथो नाम नरवरो—(रा)जाऽस्ति, सामान्यतोऽयं वर्त्तमाननिर्देशस्ततश्च आसीदित्यर्थः, तस्य राज्ञः कमलप्रभा प्रिया—भार्याऽस्ति, कीदृशी सा ?—कुंकुणनरनाथस्य—कुङ्कुणदेशस्वामिनो राज्ञो लघुभगिनी—लघ्वी स्वसा ॥ २८६ ॥ न विद्यते पुत्रो यस्याः साऽपुत्रिका तस्या अपुत्रिकायाः अस्या राज्याश्चिरेण—बहुकालेन वरस्वप्नसूचितः पुत्रो जातः, कीदृशः पुत्रो ?—जनित—उत्पादित आनन्दो (येन स) च पुनर्वर्द्धापनकं कारितम् ॥ २८७ ॥ ततो राजा प्रभणति,—अस्माकं अनाथाया लक्ष्म्याः पालने क्षमः—समर्थोऽयमस्ति, तस्मात्कारणात् नाम्नाऽयं श्रीपालो भवतु, एतावता तस्य बालस्य श्रीपाल इति नाम स्थापितम् ॥ २८८ ॥ श्रीपालो बालो यावद्वर्षयुगलपर्यायो—वर्षद्वयमितावस्थो जातस्तावत्तत्पिता सिंहरथो नाम नरनाथो—राजा शूलेन—शूलरोगेण झटिति—शीघ्रं पञ्चत्वं—मरणं प्राप्तः ॥ २८९ ॥

कमलप्पभा रुयंती, मइसायरमंतिणा निवारित्ता । धाईउच्छंगठिओ, सिरिपालो थापिओ रज्जे २९०
जं बालस्सवि सिरिपा—लनाम रन्नो पवत्तिआ आणा। सव्वत्थवि तो पच्छा, निवमियकिच्चंपि कारवियं॥
बालोवि महीपालो, रज्जं पालेइ मंतिसुत्तेणं । मंतीहिं सव्वत्थवि रज्जं रक्खिज्जए लोए ॥ २९२ ॥
कइवयदिणपज्जंते, बालयपित्तिज्जओ अजिअसेणो। परिगहभेअं काउं, मंतइ निवमंतिवहणत्थं ॥२९३॥
तं जाणिऊण मंती कहिउं कमलप्पभाइ सव्वंपि। विन्नवइ देवि ! जह तह, रक्खिज्जसु नंदणं निययं ॥

तदा रुदती—अश्रुपातं कुर्वती कमलप्रभा राज्ञी मतिसागरमन्त्रिणा निवार्य—निषेध्य धात्र्या उत्सङ्गे—अङ्के स्थितः श्रीपालो बालो राज्ये स्थापितः ॥२९०॥ यद्—यतो बालस्यापि श्रीपालनाम्नो राज्ञ आज्ञा सर्वत्राऽपि प्रवर्त्तिता, नृपमृतककृत्यं—नृपस्य मृतकार्यमपि ततः पश्चात्कारितम् ॥२९१॥ बालोऽपि महीपालो राजा मन्त्रिसूत्रेण—मन्त्रिणः—अमात्यस्य व्यवस्थया राज्यं पालयति, युक्तोऽयमर्थः, यतः सर्वत्र लोके मन्त्रिभिः रक्ष्यते, 'मन्त्रिहीनो भवेद्राजा तस्य राज्यं विनश्यती'तिवचनात्॥२९२॥ कतिपयदिनपर्यन्ते—कियद्दिनानन्तरं बालकस्य—श्रीपालस्य पितृव्यः—पितुर्भ्राताऽजितसेनो राजा परिग्रहस्य—परिकरस्य भेदं कृत्वा नृपमन्त्रिणोर्वधार्थं मंत्रयते—आलोचयति ॥२९३॥ मन्त्री तन्मन्त्रणं ज्ञात्वा कमलप्रभायै सर्वमपि वृत्तान्तं कथयित्वा विज्ञपयति, हे देवि ! यथा तथा—येन तेन प्रकारेण निजकं—स्वकीयं नन्दनं—पुत्रं रक्षस्व—पुत्ररक्षां कुरु इत्यर्थः ॥ २९४ ॥

जीवंतेण सुएणं, होही रज्जं पुणोवि निब्भंतं। ता गच्छ इमं घित्तुं, कत्थवि अहयंपि नासिस्सं॥२९५॥
तत्तो कमला घित्तूण, नंदणं निग्गया निसिमुहंमि। मा होउ मंतभेओ–त्ति सव्वहा चत्तपरिवारा॥२९६॥
निवभज्जा सुकुमाला, वहियव्वो नंदणो निसा कसिणा। चंकमणं चरणेहिं ही ही विहिविलसियं विसमं॥
पिअमरणं रज्जसिरिनासो एगागिणित्तमरितासो। रयणीवि विहायंती, हा संपइ कत्थ वच्चिस्सं?॥

सुतेन जीवता सता राज्यं पुनरपि निर्भ्रान्तं–निःसन्देहं भविष्यति, तत्–तस्मात् इमं बालं गृहीत्वा त्वं कुत्राऽपि गच्छ, अहकमपि–अहमपि नशिष्यामि–पलायिष्ये ॥ २९५ ॥ ततः–तदनन्तरं कमलप्रभाराज्ञी नन्दनं–पुत्रं गृहीत्वा निशामुखे–सन्ध्यायां निर्गता, कीदृशी सा?–मन्त्रस्य–मन्त्रणस्य भेदो मा भवतु इतिहेतोः सर्वथा त्यक्तः परिवारो–दास्यादिको यया सा एकाकिनीत्यर्थः ॥ २९६ ॥ नृपस्य–राज्ञो भार्याऽत एव सुकुमाला पुनः नन्दनः–पुत्रः कट्यां वोढव्यो–वहनीयस्तथा निशा–रात्रिः कृष्णा पुनश्चरणाभ्यां–पादाभ्यां चङ्क्रमणं–गमनं रथाद्यभावात् एतावत्य आपदो युगपत् प्राप्ताः हीहीति अतिखेदे विधेः–दैवस्य विलसितं विषमं विद्यते ॥ २९७ ॥ अथ मार्गे कमलप्रभा इति चिन्तयति, प्रियस्य–भर्त्तुर्मरणं राज्यश्रियो–राज्यलक्ष्म्या नाशः एकाकिनीत्वं पुनः अरेः–वैरिणस्त्रासः रजनी–रात्रिरपि विभातं कुर्वती–प्रभातरूपा भवन्ती, दृश्यत इत्यर्थः हा इति खेदे सम्प्रति कुत्र व्रजिष्यामि–क्व गमिष्यामि? ॥ २९८ ॥ ॥ ३६ ॥

इच्चाइ चिंतयंती जा वच्चइ अग्गओ पभायंमि। ता फिट्टाए मिलियं, कुट्ठियनरपेडयं एगं॥२९९॥
तं दट्ठूणं कमला, निरुवमरूवा महग्घआहरणा। अबला बालिक्कसुआ, भयकंपिरतणुलया रुयइ॥३००॥
तं रुयमाणिं दट्ठुं, पेडयपुरिसा भणंति करुणाए। भद्दे! कहेसु अम्हं, काऽसि तुमं कीस बीहेसि?॥३०१॥
तीए निअबंधूण व, कहिओ सव्वोऽवि निययवुत्तंतो। तेहिं च सा सभइणिव्व सम्ममासासिआ एवं॥

इत्यादि चिन्तयन्ती यावत् अग्रतो व्रजति तावत् प्रभाते–प्रभातसमये एषां कुष्ठिकनराणां पेटकं–वृन्दं 'फिट्टाए'–त्ति अपर्यालोचनया मिलितम् ॥ २९९ ॥ तं–कुष्ठिकनरवृन्दं दृष्ट्वा भयेन कम्प्रा–कम्पनशीला तनुलता–देहयष्टिर्यस्याः सा एवंविधा सती कमलप्रभा रोदिति, कीदृशी सा?–निरुपमं–अद्भुतं रूपं यस्याः सा निरुपमरूपा, पुनः कीदृशी?–महार्घाणि–बहुमूल्यानि आभरणानि–आभूषणानि यस्याः सा, पुनः अबला–न विद्यते बलं यस्याः सा स्त्रीत्वादल्पबलेत्यर्थः, पुनर्बालः–शिशुः एकः सुतो यस्याः सा तथोक्ता ॥ ३०० ॥ तदा पेटकपुरुषाः–कुष्ठिवृन्दमनुष्यास्तां राज्ञीं रुदतीं दृष्ट्वा करुणया–अनुकम्पया भणन्ति, किं भणन्तीत्याह–हे भद्रे! त्वमस्मभ्यं कथय त्वं काऽसि? तथा कथं बिभेषि–भयं प्राप्नोषि? ॥ ३०१॥ ततस्तया राज्या निजबन्धुभ्यो–निजभ्रातृभ्य इव सर्वोऽपि निजकवृन्तान्तः कथितः, तेभ्य इति शेषः, तैश्च सा राज्ञी स्वभगिनी इव–निजस्वसा इव एवं–वक्ष्यमाणप्रकारेण सम्यग् आश्वासिता ॥ ३०२ ॥

मा करसत्ति कुणसु भयं, अम्हे सव्वे सहोअरा तुज्झ । एयाइ वेसरीइ आरूढा चलसु वीसत्था ॥३०३॥
तत्तो जा सा वरवेसरीएँ चडिआ पडेण पिहिअंगी । पेडयमज्झंमि ठिया, नियपुत्तजुआ सुहं वयइ ॥
ता पत्ता वेरिभडा, उब्भडसत्थेहिं भीसणायारा । पुच्छंति पेडयं भो, दिट्ठा किं राणिआ एगा ? ॥३०५॥
पेडयपुरिसेहिं तओ, भणिअं भो अत्थि अम्ह सत्थंमि । रउताणियात्ति नूनं, जइ कज्जं ता पगिण्हेह॥
एगेण भडेण तओ, नायं भणिअं च दिंति मे पामं । सव्वं दिज्जइ संतं, तो कुट्ठभएण ते नट्ठा ॥३०७॥

कथमित्याह--हे भगिनि ! त्वं कस्यापि भयं मा कुरुष्व, यतो वयं सर्वे तव सहोदरा–भ्रातरः स्म, एतस्यां वेसर्यां--अश्वतर्य्यां आरूढा विश्वस्ता सती चल–व्रज ॥ ३०३ ॥ ततः–तदनन्तरं या कमलप्रभाराज्ञी सा वरवेसर्य्यां चटिता--आरूढा पुनः पटेन--वस्त्रेण पिहितम्–आच्छादितमङ्गं यस्याः सा तथोक्ता, पुनः पेटकस्य–कुष्ठिवृन्दस्य मध्ये स्थिता एवंविधा सती निजपुत्रेण युता सुखं व्रजति–गच्छति ॥ ३०४ ॥ तावद्वैरिणः--अजितसेनस्य भटाः प्राप्ताः सन्तः कुष्ठिकवृन्दं पृच्छन्ति, भो भवाद्भिः किं एका राज्ञी दृष्टा ?, कीदृशा भटाः ?–उद्भटशस्त्रैः–उद्धतप्रहरणैर्भीषणः–भयङ्कर आकारो येषां ते तथोक्ताः ॥३०५॥ ततः–तदनन्तरं कुष्ठिपेटकपुरुषैर्भणितं–भो भटाः! अस्माकं सार्थे नूनं–निश्चितं 'रउताणिअ'त्ति पामाप्यस्ति, आस्तां राज्ञीत्यपिशब्दार्थः, यदि युष्माकं पामया सह कार्यं तर्त्तर्हि प्रकर्षेण गृह्णीत यूयम् ॥३०६॥ तत एकेन भटेन ज्ञातं भणितं च–अहो ! इमे कुष्ठिकनराः पामां ददति, युक्तं चैतत्, यतः सर्वं सद्–विद्यमानं दीयते, ततः कुष्ठभयेन ते सर्वेऽपि भटा नष्टाः–पलायिताः ॥ ३०७॥ 

तेहिं गएहिं कमला, कमेण पत्ता सुहेण उज्जेणिं । तत्थ ठिआ य सपुत्ता, पेडयमन्नत्थ संपत्तं ॥३०८॥
भूसणधणेण तणओ, जा विहिओ तीइ जुव्वणाभिमुहो । ता कम्मदोसवसओ, उंबररोगेण सो गहिओ ॥
बहुएहिंपि कएहिं, उवयारेहिं गुणो न से जाओ । कमलप्पहा अदन्ना, जणं जणं पुच्छए ताव ॥३१०॥
केणवि कहिअं तीसे, कोसंबीए समत्थि वरविज्जो । जो अट्ठारसजाई, कुट्ठस्स हरेइ निब्भंतं ॥३११॥

अत्र सप्तम्यर्थे तृतीया ततश्चायमर्थः–तेषु भटेषु गतेषु सत्सु कमलप्रभा राज्ञी क्रमेण उज्जयिनीं नगरीं सुखेन प्राप्ता, च पुनः सपुत्रा–पुत्रसहिता तत्रोज्जयिन्यां स्थिता ॥३०८॥ ततस्तया राज्ञ्या तनयः–स्वपुत्रो भूषणधनेन–विक्रीतस्वाभरणद्रव्येण यावत् यौवनाभिमुखो विहितः–कृतः यौवनावस्थां प्रापित इत्यर्थः तावत्कर्मदोषवशतः–प्राकृतकर्मदोषवशात् स बालः उम्बररोगेण–कुष्ठविशेषेण गृहीतः ॥ ३०६ ॥ बहुभिरपि उपचारैः–प्रतिकारैः कृतैस्तस्य गुणो न जातः तदा कमलप्रभाराज्ञी 'अदंन्न'त्ति अधीरा सती जनं जनं रोगनिर्गमनोपायं पृच्छति ॥ ३१० ॥ तावत् केनापि पुरुषेण तस्याः कथितं–तस्यै उक्तमित्यर्थः, किं कथितमित्याह–कौशाम्ब्यां नगर्य्यां वरवैद्यः–प्रधानवैद्यः समस्ति, यो वैद्यः कुष्ठस्य अष्टादश जातीर्निर्भ्रान्तं–निस्सन्देहं हरति–दूरीकरोति ॥ ३११ ॥

कमला पुत्तं पाडोसिआण सम्मं भलाविऊण सयं । विज्जस्स आणणत्थं, पत्ता कोसंबिनयरीए ॥
तं विज्जं तित्थगयं, पडिक्खमाणी चिरं ट्ठिआ तत्थ। मुणिवयणाओ मुणिऊण पुत्तसुद्धिं इहं पत्ता ॥
साऽहं कमला सो एस मज्झ पुत्तुत्तमो (त्थि) सिरिपालो। जाओ तुज्झ सुयाए, नाहो सव्वत्थ विक्खाओ ॥
सीहरहरायजायं, नाउं जामाउअं तओ रुप्पा। साणंदं अभिणंदइ, संसइ पुन्नं च धूयाए ॥३१५॥
गंतूण गिहं रुप्पा, कहेइ तं भायपुण्णपालस्स। सोऽवि सहरिसो कुमरं, सकुडुंबं नेइ नियगेहं ॥३१६॥

तदा कमलप्रभा स्वपुत्रं प्रातिवेशिमकजनानां सम्यक् भालयित्वा-समर्प्य स्वयं-आत्मना वैद्यस्य आनयनार्थं कौशाम्ब्यां नगर्यां प्राप्ता ॥३१२॥ तीर्थगतं-यात्रानिमित्तं तीर्थेषु गतं तं वैद्यं प्रतीक्षमाणा सा-कमलप्रभा तत्र-कौशाम्ब्यां चिरं-बहुकालं स्थिता, पश्चान्मुनिवचनात् पुत्रस्य शुद्धिं मुणित्वा-ज्ञात्वा इह प्राप्ता ॥ ३१३ ॥ सा कमलप्रभाऽहमस्मि स एष मम पुत्रोत्तमः श्रीपालोऽस्ति यस्तव सुतायाः-पुत्र्या नाथो-भर्त्ता जातः, पुनः सर्वत्र लोके विख्यातः-प्रसिद्धो जातः ॥३१४॥ ततः-तदनन्तरं 'रुप्प'त्ति रूप्यसुन्दरीराज्ञी सिंहरथराजस्य जातं-पुत्रं जामातरं ज्ञात्वा सानन्दं यथा स्यात्तथा अभिनन्दति-अनुमोदते, च पुनः स्वपुत्र्याः पुण्यं शंसति-प्रशंसति ॥ ३१५ ॥ ततो रूप्यसुन्दरी गृहं गत्वा स्वभ्रातुः पुण्यपालस्याग्रे तं वृत्तान्तं कथयति, तदा स पुण्यपालोऽपि सहर्षः सन् सकुटुम्बं-मात्रादिकुटुम्बसहितं कुमारं निजगेहं नयति-प्रापयति ॥ ३१६ ॥

॥ ३८ ॥

अप्पेइ वरावासं, पूरइ धणधन्नकंचणाईयं । तत्थऽच्छइ सिरिवालो, दोगुंदुगदेवलीलाए ॥ ३१७ ॥
अन्नदिणे तस्सावासपाससेरीइ निग्गओ राया। पिक्खइ गवक्खसंठिअकुमरं मयणाइ संजुत्तं ॥३१८॥
तो सहसा नरनाहो, मयणं दट्ठूण चिंतए एवं। मयणाइ मयणवसगाइ मह कुलं मइलियं नूणं ॥३१९॥
इक्कं मए अजुत्तं, कोवंधेणं तया कयं बीअं । कामंधाइ इमीए विहियं ही ही अजुत्तयरं ॥ ३२० ॥

वरवासं-अवस्थानार्थं प्रधानमन्दिरं अर्पयति-ददाति, तथा धनधान्यकाञ्चनादिकं पूरयति, श्रीपालस्तत्रावासे दोगुंदुकानां-त्रायस्त्रिंशकानां देवानां लीलयाऽवतिष्ठते ॥ ३१७ ॥ अन्यस्मिन् दिने तस्य-श्रीपालस्य य आवासस्तस्य पार्श्वे या सेरी-मार्गविशेषस्तस्यां राजा निर्गतः, तत्र च मदनसुन्दर्या संयुक्तं गवाक्षे सं-सम्यक् प्रकारेण स्थितं कुमारं-श्रीपालं प्रेक्षते-पश्यति स्म, सेरीति देशीशब्दोऽयम् ॥ ३१८ ॥ ततः-तदनन्तरं नरनाथो-राजा प्रजापालः सहसा-अकस्मात् मदनसुन्दरीं दृष्ट्वा एवं-वक्ष्यमाणप्रकारेण चिन्तयति, मदनस्य-कामस्य वशं गच्छतीति मदनवशगा तया मदनसुन्दर्या नूनं-निश्चितं मम कुलं मलिनीकृतम् ॥३१९॥ तदा-तस्मिन्नवसरे एकं तु मया कोपान्धेन सता अयुक्तं कृतं यत्कुष्ठिने स्वपुत्री दत्ता, द्वितीयं पुनः अनया कामान्धया सत्या हीहीति खेदेऽयुक्ततरम्-अतिशयेनायुक्तं विहितं-कृतं, यत् स्वपतिं त्यक्त्वाऽन्यपतिः स्वीकृतः ॥ ३२० ॥

एवं जायविसायस्स तस्स रन्नो सुपुण्णपालेण । विन्नत्तं तं सव्वं, धूयाचरिअं सअच्छरिअं ॥३२१॥
तं सोऊणं राया, विम्हिअचित्तो गओ तमावासं। पणओ य कुमारेणं, मयणासहिएण विणएणं ॥३२२॥
लज्जाऽऽणओ नरिंदो, पभणइ धिद्धी ममं गयविवेअं। जं दप्पसप्पविसमुच्छिएण कयमेरिसमकज्जं ॥
वच्छे! धन्नाऽसि तुमं, कयपुन्ना तंसि तंसि सविवेआ। तं चेव मुणियतत्ता, जीए एयारिसं सत्तं ॥३२४॥

एवमुक्तप्रकारेण जात–उत्पन्नो विषादो यस्य स तथा तस्य राज्ञोऽग्रे सुष्ठु–शोभनेन पुण्यपालेन तत् सर्वं पुत्रीचरितं विज्ञप्तं, कीदृशं चरितम् ?–आश्चर्येण सह वर्त्तते इति साश्चर्यम् ॥ ३२१ ॥ तत्पुत्रीचरित्रं श्रुत्वा राजा विस्मितं–आश्चर्यं प्राप्तं चित्तं यस्य स तादृशः सन् तं आवासं–मन्दिरं गतः, मदनासहितेन श्रीपालकुमारेण विनयेन प्रणतो–नमस्कृतश्च ॥ ३२२ ॥ लज्जया आनतो–नम्रः सन् नरेन्द्रो–राजा प्रभणति–वदति, गतो विवेको यस्य स तथा तं निर्विवेकं मां धिक् धिक्, यद्–यस्मात्कारणात् दर्पः–अभिमानः स एव सर्पस्तस्य यद्विषं–स्तब्धतालक्षणं तेन मूर्च्छितेन मया ईदृशं अकार्यं कृतम् ॥३२३॥ हे वत्से–हे पुत्रि ! त्वं धन्याऽसि पुनः त्वं कृतपुण्याऽसि, पुनः त्वं सह विवेकेन वर्तते इति सविवेकाऽसि, तथा मुणितं–ज्ञातं तत्त्वं यया सा ईदृशी त्वमेवासि यस्या एतादृक् सत्त्वं–धैर्यम् ॥ ३२४ ॥



उद्धरिअं मज्झ कुलं, उद्धरिया जीइ निययजणणीवि। उद्धरिओ जिणधम्मो, सा धन्ना तंसि परमिक्का ॥
अन्नाणतमंधेणं, दुद्धरऽहंकारगयविवेगेणं । जो अवराहो तइआ, कओ मए तं खमसु वच्छे! ॥३२६॥
विणओणया य मयणा, भणेइ मा ताय! कुणसु मणखेयं । एयं मह कम्मवसेण चेव सव्वंपि संजायं ॥
नो देइ कोइ कस्सवि, सुक्खं दुक्खं च निच्छओ एसो। निअयं चेव समज्जिअमुवभुञ्जइ जंतुणा कम्मं ॥
मा वहउ कोइ गव्वं, जं किर कज्जं मए कयं होइ । सुरवरकयंपि कज्जं, कम्मवसा होइ विवरीअं॥३२९॥

हे पुत्रि ! यया मम कुलं उद्धृतं, पुनः यया निजका स्वकीया जननी–माताऽप्युद्धृता, तथा जिनधर्म्म उद्धृतः–शोभां प्रापितः, सा त्वमेका परं–केवलं धन्याऽसि ॥३२५॥ हे वत्से! अज्ञानमेव तमः–अन्धकारं तेन योऽन्ध(अज्ञानतमोऽन्धः)ऽस्तेन, पुनः दुर्द्धरो योऽहङ्कारस्तेन गतो विवेको यस्य स तेन एवंविधेन मया तदा यः अपराधः कृतस्तं क्षमस्व त्वम् ॥ ३२६ ॥ एवं राज्ञा उक्ते सति विनयेन अवनता–नम्रा मदनसुन्दरी भणति–हे तात ! मनसि खेदं मा कुरु, एतत्सर्वमपि मम कर्म्मवशेनैव सञ्जातं, अत्र मनागपि भवद्दोषो नास्तीत्यर्थः ॥ ३२७ ॥ हे तात ! एष निश्चयोऽस्ति, कोऽपि कस्यापि सुखं दुःखं वा न ददाति, किन्तु जन्तुना–जीवेन निजकं–स्वकीयं एव समर्जितं–उपार्जितं कर्म उपभुज्यते ॥ ३२८ ॥ किलेति–निश्चितं मया कृतं कार्यं भवति इति कोऽपि गर्व्वं मा वहतु–मा दधातु, यद्–यस्मात्कारणात् सुरवरैः–इन्द्रादिभिः कृतमपि कार्यं कर्म्मवशाद्विपरीतं भवति ॥ ३२९ ॥

ता ताय ! जिणुत्तं तत्तमुत्तमं मुणसु जेण नाएणं । नज्जइ कम्मजियाणं, बलाबलं बंधमुक्खं च ॥३३०॥
तत्तो धम्मं पडिवज्जिऊण राया भणेइ संतुट्ठो । सीहरहरायतणओ जं जामाया मए लद्धो ॥३३१॥
तं पत्थरमित्तकए, हत्थंमि पसारियंमि सहसत्ति । चडिओ अचिंतिओ च्चिय नूनं चिंतामणी एसो ॥
जामाइयं च धूयं, आरोविय गयवरंमि नरनाहो । महया महेण गिहमाणिऊण सम्माणइ धणेहिं ॥

तत्–तस्मात्कारणात् हे तात ! जिनोक्तं तत्त्वं उत्तमं मुण–जानीहि येन ज्ञातेन कर्म्माणि च जीवाश्च कर्मजीवास्तेषां कर्म्मजीवानां बलं च अबलं च बलाबलं ज्ञायते, 'कत्थवि जीवो बलिओ, कत्थवि कम्माइं हुंति बलियाइं' इत्यादि, च पुनः बंधश्च मोक्षश्चानयोः समाहारो बन्धमोक्षं ज्ञायते ॥३३०॥ ततः–तदनन्तरं राजा धर्मं प्रतिपद्य–अङ्गीकृत्य सन्तुष्टः सन् भणति–यन्मया सिंहरथराजस्य तनयः–पुत्रो जामाता लब्धः ॥ ३३१ ॥ तत् प्रस्तरमात्रकृते–पाषाणमात्रग्रहणनिमित्तं हस्ते प्रसारिते सति सहसा–अकस्मात् नूनं–निश्चितं अचिन्तित एव–अवितर्कित एव इति एतत्स्वरूप एष चिन्तामणिर्हस्ते चटितः ॥३३२॥ ततो नरनाथो–राजा जामातरं–श्रीपालं च पुनः पुत्रीं–मदनसुन्दरीं गजवरे–प्रधानहस्तिनि आरोप्य महता महेन–उत्सवेन स्वगृहमानीय धनैः–विविधद्रव्यैः सन्मानयति ॥ ३३३ ॥



जायं च साहुवायं, मयणाए सत्तसीलकलियाए । जिणसासणप्पभावो, सयले नयरंमि वित्थरिओ ॥
अन्नदिणे सिरिपालो, हयगयरहसुहडपरियरसमेओ । चडिओ रयवाडीए पच्चक्खो सुरकुमारुव्व ॥३३५॥
लोए अ रुप्पमोए, पिक्खंते चडवि चंदसालासुं । गामिल्लएण केणवि, नागरिओ पुच्छिओ कोवि ॥३३६॥
भो भो कहेसु को एस जाइ लीलाइ रायतणउव्व ? । नागरिओ भणइ अहो, नरवरजामाउओ एसो ॥३३७॥
तं सोऊण कुमारो सहसा सरताडिओव्व विच्छाओ । जाओ वलिऊण समागओ अ गेहंमि सविसाओ ॥

तदा सत्त्वशीलाभ्यां–धैर्यब्रह्मचर्याभ्यां कलिताया–युक्ताया मदनसुन्दर्याः साधुवादश्च सञ्जातः–साधुर्महासतीयमिति वाक्यं प्रादुरभूदित्यर्थः, तथा जिनशासनस्य प्रभावः सकलेऽपि नगरे विस्तृतो–विस्तारं प्राप्तः ॥ ३३४ ॥ अन्यास्मिन् दिने श्रीपालो हयगजरथसुभटानां यः परिकरः–परिवारस्तेन समेतः–संयुक्तः सन् प्रत्यक्षः सुरकुमार इव राजवाटिकायां चटितः–राजवाटिकायां क्रीडार्थं चलित इत्यर्थः ॥ ३३५ ॥ तदा सह प्रमोदेन–हर्षेण वर्त्तते सप्रमोदस्तस्मिन् लोके च चन्द्रशालासु–गृहोपरितनभूमिषु चटित्वा कुमारं प्रेक्षमाणे सति केनापि ग्रामीणेन नरेण कोऽपि नागरिको–नगरवासी पृष्टः–॥३३६॥ भो भो त्वं कथय लीलया राजतनयो–राजपुत्र इव क एष याति ?, एवं ग्रामीणेन पृष्टे सति नागरिको भणति–अहो एष नरवरस्य–राज्ञो जामाताऽस्ति ॥ ३३७ ॥ तन्नागरिकवचः श्रुत्वा कुमारः सहसा–अकस्मात् शरेण–बाणेन ताडित इव विच्छायो जातः, च पुनः सविषादः सन् तत एव वलित्वा गृहं समागतः ॥ ३३८ ॥

तं तारिसं च जणणी, दट्ठूण समाकुला भणइ एवं। किं अज्ज वच्छ! कोवि हु, तुह अंगे वाहए वाही?॥
॥४१॥ किं वा आखंडलसरिस, तुज्झ केणावि खंडिया आणा?। अहवा अघडंतोवि हु, पराभवो केणवि कओ ते?॥
किं वा कन्नारयणं, किंपि हु हियए खडुक्कए तुज्झ। घरणीकओ अविणओ, सो मयणाए न संभवइ॥३४१
केणावि कारणेणं, चिंतातुरमत्थि तुह मणं नूणं। जेणं तुह मुहकमलं, विच्छायं दीसई वच्छ!॥३४२॥
कुमरेण भणिअमम्मो!, एएसिं मज्झओ न एक्कंपि। कारणमत्थित्थमिमं, अन्नं पुण कारणं सुणसु॥३४३

तदा जननी-माता तं कुमारं तादृशं विच्छायवदनं दृष्ट्वा समाकुला-व्याकुला सती एवं भणति-हे वत्स! अद्य तवाङ्गे किं कोऽपि व्याधिः-रोगो बाधते?-पीडां उत्पादयति, चतुशब्दौ पादपूरणे॥ ३३९॥ वा-अथवा हे आखण्डल-सदृश-हे इन्द्रतुल्य! हे वत्स! तवाज्ञा किं केनापि पुरुषेण खण्डिता-भग्ना?, अथवा अघटमानोऽपि हु इति निश्चितं ते-तव पराभवः-अनादरः केनापि कृतः? येन त्वमीदृशो दृश्यसे॥३४०॥ किंवा किमपि कन्यारत्नं तव हृदये 'खडुक्कए' त्ति खडुकते सामयिकोऽयं प्रयोगः, तथा गेहिन्या-स्वस्त्रिया कृतो योऽविनयः स मदनसुन्दर्या न सम्भवति॥ ३४१॥ नूनं-निश्चयेन केनापि कारणेन तव मनश्चिन्तातुरमस्ति, येन कारणेन हे वत्स! तव मुखकमलं विच्छायं दृश्यते॥३४२॥ कुमारेण भणितं-हे अम्ब-हे मातः! एतेषां मध्यात् अत्र मम एकमपि कारणं नास्ति, अन्यत् पुनः कारणमस्ति तत्त्वं शृणु॥ ३४३॥ ॥४१॥

नाहं निअयगुणेहिं, न तायनामेण नो तुह गुणेहिं। इह विक्खाओ जाओ, अहयं ससुरस्स नामेणं॥
तं पुण अहमाहमत्तकारणं वज्जिअं सुपुरिसेहिं। तत्तुच्चिय मज्झ मणं, दूमिज्जइ ससुरवासेणं॥३४५॥
तो भणिअं जणणीए, बहुसिन्नं मेलिऊण चउरंगं। गिण्हसु निअपिअरज्जं, मह हिययं कुणसु निस्सल्लं॥
कुमरेणुत्तं ससुरय-बलेण जं गिण्हणं सरज्जस्स। तं च महच्चिअ दूमइ, मज्झं चित्तं धुवं अम्मो! ३४७

इह-अस्मिन्नगरेऽहं निजकगुणैः-स्वकीयगुणैर्विख्यातः-प्रसिद्धो न जातोऽस्मि, न तातनाम्ना-पितृनाम्ना विख्यातो जातोऽस्मि, नो पुनः तव गुणैर्विख्यातो जातोऽस्मि, किन्तु अहं श्वशुरस्य नाम्ना विख्यातो जातोऽस्मि॥ ३४४॥ तत्पुनः-श्वशुरनाम्ना विख्यातभवनं अधमाधमत्वस्य कारणमस्ति, अत एव सुपुरुषैर्वर्जितं तत एव श्वशुरवासेन-श्वशुर-गृहंनिवासेन मम मनो दूयते-सन्तप्तं भवति-"उत्तमाः स्वगुणैः ख्याताः, मध्यमाश्च पितुर्गुणैः। अधमा मातुलैः ख्याताः, श्वशुरैश्चाधमाधमाः" ॥ १॥ इति वचनात्॥ ३४५॥ ततो जनन्या-मात्रा भणितं-हे पुत्र! चत्वारि अङ्गानि यस्य तच्चतुरङ्गं-हस्त्यश्वादिरूपं बहुसैन्यं मेलयित्वा निजपितुः राज्यं गृहाण, मम हृदयं निःशल्यं कुरु॥ ३४६॥ कुमारेणोक्तं-हे मातः! श्वशुरस्य बलेन यत् स्वराज्यस्य ग्रहणं तच्च ध्रुवं-निश्चितं महदेव मम चित्तं 'दूमेइ' त्ति दूनं करोति-दूनयति सन्तापयतीत्यर्थः॥ ३४७॥

ता जइ सभुयाज्जिअ ।सिरिबलेण गिण्हामि पेइअं रज्जं । ता होइ मज्झ चित्तंमि निव्वुई अन्नहा नेव ॥
तत्तो गंतूणमहं, कत्थवि देसंतरंमि इक्किल्लो । अज्जिअलच्छिबलेणं, लहुं गहिस्सामि पिअरज्जं ॥३४९॥
तं पइ जंपइ जणणी, बालो सरलोऽसि तंसि सुकुमालो । देसंतरेसु भमणं, विसमं दुक्खावहं चेव ॥
तो कुमरो जणणीं पइ, जंपइ मा माइ! एरिसं भणसु । तावच्चिय विसमत्तं, जाव न धीरा पवज्जंति ३५१
पभणइ पुणोऽवि माया, वच्छय ! अम्हे सहागमिस्सामो । को अम्हं पडिबंधो, तुमं विणा इत्थ ठाणंमि?

तस्माद्यदि स्वभुजाभ्यां अर्जिता–उपार्जिता या श्रीः–लक्ष्मीस्तस्या बलेन पितुरिदं पैतृकं राज्यं गृह्णामि तर्हि मम चित्ते निर्वृत्तिः–सुखं भवति, अन्यथा–अन्येन प्रकारेण सुखं नैव भवेत् ॥ ३४८ ॥ ततः–तस्मात्कारणात् अहं एकाकी सन् कुत्रापि देशान्तरे गत्वा स्वोपार्जितलक्ष्मीबलेन लघु–शीघ्रं पितृराज्यं ग्रहीष्यामि ॥ ३४९ ॥ तं श्रीपालं प्रति जननी–माता जल्पति–वक्ति, हे पुत्र ! त्वं बालोऽसि, पुनः ! सरलः–ऋजुरसि, पुनः सुकुमालोऽसि, देशान्तरेषु भ्रमणं तु विषमं, अत एव दुःखावहं–दुःखकारकमेवाऽस्ति ॥ ३५० ॥ ततः कुमारो जननीं प्रति जल्पति–हे मातः ! ईदृशं वचो मा भण–मा कथय कार्यमात्रस्य विषमत्वं तावदेवाऽस्ति यावत् धीरा–धैर्य्यवन्तः पुरुषा न प्रपद्यन्ते–नाङ्गीकुर्व्वन्ति ॥ ३५१ ॥ पुनरपि माता प्रभणति–हे वत्स ! वयं भवता सह आगमिष्यामः, अत्र स्थाने त्वां विनाऽस्माकं कः प्रतिबन्धोऽस्ति–न कोऽपीत्यर्थः ॥३५२॥



कुमरो कहेइ अम्मो ! तुम्हेहिं सहागयाहिं सव्वत्थ । न भवामि मुक्कलपओ, ता तुम्हे रहह इत्थेव ॥
मयणा भणेइ सामिअ ! तुम्हं अणुगामिणी भविस्सामि । भारंपि हु किंपि अहं न करिस्सं देहछायव्व ॥
कुमरेणुत्तं उत्तमधम्मपरे देवि ! मज्झ वयणेणं । नियसस्सूसुरसूसणपरा तुमं रहसु इत्थेव ॥३५५॥
मयणाऽऽह पइपवासं सइओ इच्छंति कहवि नो तहवि । तुम्हं आएसुच्चिय महप्पमाणं परं नाह ! ॥३५६
अरिहंताऽऽइपयाइं खणंपि न मणाउ मिल्हियव्वाइं । नियजणणिं च सरिज्जसु कइयावि हु मंऽपि नियदासीं

कुमारः कथयति–हे अम्ब ! युष्माभिः सह आगताभिः सतीभिः अहं सर्वत्र प्रदेशे मुत्कलपदो–मुत्कलचरणो नो भवामि, तस्माद्यूयं अत्रैव अवतिष्ठध्वम् ॥ ३५३ ॥ मदनसुन्दरी भणति–हे स्वामिन् ! अहं युष्माकं अनुगामिनी–पश्चात्संचारिणी भविष्यामि, हु इति निश्चितं भारमपि किमपि न करिष्ये, का इव ?–देहस्य छाया इव ॥३५४॥ कुमारेणोक्तं–हे उत्तमधर्मपरे–सद्धर्मतत्परे ! हे देवि ! मम वचनेन त्वं नित्यं निजश्वश्र्वाः शुश्रूषणं–सेवनं एव परं–प्रधानं यस्याः सा एवंविधा सती अत्रैवावतिष्ठस्व ॥ ३५५ ॥ तदा मदनसुन्दरी आह–सत्यः–सुशीला नार्य्यः कथमपि–केनापि प्रकारेण पत्युः प्रवासं–भर्त्तुर्विदेशगमनं न इच्छन्ति, तथापि हे नाथ ! मम परं–केवलं युष्माकं आदेशः–आज्ञैव प्रमाणम् ॥ ३५६ ॥ भवद्भिः अर्हदादिपदानि क्षणं यावदपि निजमनसो न मोक्तव्यानि–न दूरीकर्त्तव्यानि, च पुनः निजजननीं स्मरिष्यध्वं, कदापि च मामपि–निजदासीं स्मरिष्यध्वम् ॥ ३५७ ॥

जणणीवि तस्स नाऊण निच्छयं तिलयमंगलं काउं। पभणइ तुह सेयत्थं, नवपयझाणं करिस्समहं ॥
मयणा भणेइ अहयंपि नाह ! निच्चंपि निच्चलमणेणं। कल्लाणकारणाइं झाइस्सं ते नव पयाइं ॥३५९॥
तेणं मयणावयणामएण सित्तो नमित्तु माइपए। संभासिऊण दइयं सिरिपालो गहिअकरवालो ॥
निम्मलवारुणमंडलमंडिअससिचारपाणसुपवेसे। तच्चरणपढमकमणं कमेण चल्लेइ गेहाओ जुम्मं॥३६१॥
सो गामागरपुरपत्तनेसु कोऊहलाइं पिक्खंतो। निब्भयचित्तो पंचाणणुव्व गिरिपरिसरं पत्तो ॥३६२॥

अथ जनन्यपि तस्य-श्रीपालस्य विदेशगमने निश्चयं ज्ञात्वा तिलकमङ्गलं कृत्वा प्रभणति-वक्ति, हे पुत्र ! तव श्रेयोऽर्थं अहं नवपदध्यानं करिष्ये ॥ ३५८ ॥ मदनसुन्दरी भणति-हे नाथ ! अहमपि नित्यमेव निश्चलमनसा-एकाग्रचित्तेन ते-तव कल्याणस्य कारणानि नव पदानि ध्यास्यामि-स्मरिष्यामि ॥ ३५९ ॥ तेन मदनाया वचनामृतेन सिक्तः श्रीपालो मातृपादौ नत्वा दयितां-स्त्रीं मदनसुन्दरीं सम्भाष्य गृहीतः करवालः-तरवारिर्येन स गृहीतकरवालः सन् ॥३६०॥ निर्मलं यद्वारुणमण्डलं-जलमण्डलं तेन मण्डितो यः शशिचारप्राणः-चन्द्रनाडीसञ्चारी वायुस्तस्य सुष्ठु-शोभने प्रवेशे सति अर्थाद्वामस्वररूपचन्द्रनाड्यां वहमानायां तस्य चरणस्य-वामपादस्य यत्प्रथमं क्रमणं-उत्पाट्य स्थापनं तेन क्रमेण गृहाच्चलति ॥ ३६१ ॥ स श्रीपालो ग्रामाकरपुरपत्तनेषु कौतूहलानि-कौतुकानि प्रेक्षमाणः पञ्चाननः-सिंह इव निर्भयं चित्तं यस्य स निर्भयचित्तः सन् गिरेः-पर्वतस्य परिसरं-पार्श्वप्रदेशं प्राप्तः ॥ ३६२ ॥



तत्थ य एगंमि वणे नंदणवणसरिससरसपुप्फफले। कोइलकलरवरम्मं तरुपंतिं जा निहालेइ ॥३६३॥
ता चारुचंपयतले आसीणं पवररूवनेवत्थं। एगं सुंदरपुरिसं पिक्खइ मंतं च झायंतं ॥ ३६४ ॥
सो जाव समत्तीए विणयपरो पुच्छिओ कुमारेण। कोऽसि तुमं किं झायसि? एगागी किं च इत्थ वणे?
तेणुत्तं गुरुदत्ता विज्जा मह अत्थि सा मए जविआ। परमुत्तरसाहगमंतरेण सा मे न सिज्झेइ ॥३६६॥
जइ तं होऽसि महायस! मह उत्तरसाहगो कहवि अज्ज। ताऽहं होमि कयत्थो, विज्जा सिद्धीइ निब्भंतं॥

तत्र च-गिरिपार्श्वदेशे एकस्मिन् वने तरूणां-वृक्षाणां पंक्तिं-श्रेणिं यावन्निभालयति-विलोकते, कीदृशे वने ?-नन्दनवनसदृशानि सरसानि-रसभृतानि पुष्पफलानि यस्मिंस्तत् तस्मिन्, कीदृशीं तरुपंक्तिं ?-कोकिलानां कलरवैर्मधुरध्वनिभिः (रम्यां) ॥ ३६३ ॥ तावच्चारुः-मनोज्ञो यश्चम्पको-वृक्षविशेषस्तस्य तले आसीनं-उपविष्टं पुनः प्रवरं-प्रधानं रूपम्-आकृतिर्नेपथ्यं च-वेषो यस्य स तं ईदृशं एकं सुन्दरपुरुषं मन्त्रं च ध्यायन्तं-जपन्तं प्रेक्षते ॥ ३६४ ॥ स पुमान् जापसमाप्तौ सत्यां विनयपरो-विनयकरणतत्परः सन् कुमारेण पृष्टः-त्वं कोऽसि ? किं ध्यायसि ? च पुनरत्र वने एकाकी किं-किमर्थमित्यर्थः ॥ ३६५ ॥ तेन पुरुषेणोक्तं-मम गुरुदत्ता विद्याऽस्ति, सा मया जप्ता परं सा मे-मम विद्या उत्तरसाधकमन्तरेण-साहाय्यकारिपुरुषं विना न सिद्ध्यति ॥ ३६६ ॥ हे महायशः-हे महायशस्विन् ! यदि त्वं कथमपि-केनापि प्रकारेण अद्य मम उत्तरसाधको भवसि तु-तर्हि अहं निर्भ्रान्तं-निस्सन्देहं विद्यासिद्ध्या कृतार्थो भवामि ॥ ३६७ ॥

तत्तो कुमरकएणं साहज्जेणं स साहगो पुरिसो। लीलाइ सिद्धविज्जो जाओ एगाइ रयणीए ॥३६८॥
तत्तो साहगपुरिसेण तेण कुमरस्स ओसहीजुअलं। पडिउवयारस्स कए दाऊणं भणियमेयं च–॥
जलतारिणी अ एगा परसत्थनिवारिणी तहा बीया। एयाउ ओसहीओ तिधाउमढियाउ धारिज्जा ॥
कुमरेण समं सो विज्जसाहगो जाइ गिरिनियंबंमि। ता तत्थ धाउवाइअपुरिसेहिं एरिसं भणिओ ॥
देव! तुह दंसिएणं कप्पपमाणेण साहयंताणं। केणावि कारणेणं अम्हाण न होइ रससिद्धी ॥३७२॥

ततः–तदनन्तरं कुमारकृतेन साहाय्येन स साधकः पुरुषो लीलया एव एकस्यां रजन्यां सिद्धा विद्या यस्य स सिद्धविद्यो जातो–भूतः ॥३६८॥ ततः–तदनन्तरं तेन–साधकपुरुषेण प्रत्युपकारनिमित्तं कुमारस्येति–कुमाराय औषधीयुगलं–द्वे औषध्यौ दत्त्वा एतद्भणितं–उक्तम् ॥ ३६९ ॥ किं भणितमित्याह–अनयोरोषध्योर्मध्ये एका औषधी जलतारणी वर्त्तते, तथा द्वितीया औषधी परस्य–शत्रोः शस्त्रस्य निवारणी अस्ति, एते द्वे औषध्यौ त्रयाणां धातूनां समाहारस्त्रिधातु–स्वर्णरूपताम्रात्मकं धातुत्रयं तत्र 'मढियाओ'त्ति प्रक्षिप्ते विधाय त्वं धारयेः ॥ ३७० ॥ स विद्यासाधकः पुमान् कुमारेण समं–सह यावद्गिरिनितम्बे–पर्वतकटके याति तावत्तत्र धातुवादिकपुरुषैरीदृशं भणितः–ईदृग् वचनमुक्तमित्यर्थः ॥३७१॥ हे देव! त्वद्दर्शितेन कल्पप्रमाणेन साधयतां–रससिद्धिं कुर्वतां अस्माकं केनापि कारणेन रसस्य–सुवर्णोत्पादकरसस्य सिद्धिः–निष्पत्तिर्न भवति ॥३७२॥



कुमरेण तओ भणियं भो मह दिट्ठीइ साहह इमंति। ता तेहिं तहाविहिए जाया कल्लाणरससिद्धी ॥
काऊण कंचणं साहगेहिं भणिअं कुमार! अम्हाणं। जं जाया रससिद्धी तुम्हाणं सो पसाओत्ति ॥३७४॥
ता गिण्ह कणगमेयं नो गिण्हइ निप्पिहो कुमारो य। तहवि हु अलयंतस्सवि किंपि हु बंधंति ते वत्थे ॥
तत्तो कुमरो पत्तो कमेण भरुयच्छनामयं नयरं। कणगव्वएण गिण्हइ वत्थालंकारसत्थाइं ॥३७६॥
काऊण धाउमढियं ओसहिजुयलं च बंधइ भुयंमि। लीलाइ भमइ नयरे सच्छंदं सुरकुमारुव्व ॥३७७॥

ततः कुमारेण भणितं–भोः पुरुषा! यूयं मम दृष्टौ इमं रसं साधयत इति, ततस्तैस्तथा–तेन प्रकारेण विहिते–कृते सति कल्याणरसस्य स्वर्णरसस्य सिद्धिर्जाता ॥३७३॥ ततः साधकैः काञ्चनं–स्वर्णं कृत्वा–निष्पाद्य भणितं–उक्तं–हे कुमार! अस्माकं यत् रससिद्धिर्जाता स युष्माकं प्रसाद इति ॥३७४॥ तस्मादेतत् कनकं–स्वर्णं त्वं गृहाण, कुमारश्च निःस्पृहः सन् न गृह्णाति, तथापि 'अलयंतस्स'त्ति अलातोऽपि–अगृह्णतोऽपि कुमारस्य वस्त्रे ते पुरुषाः किमपि स्वर्णं बध्नन्ति ॥ ३७५ ॥ ततः श्रीपालकुमारः क्रमेण 'भरुअच्छ' त्ति भृगुकच्छनामकं नगरं प्राप्तः, तत्र कनकव्ययेन–स्वर्णव्ययं कृत्वेत्यर्थः वस्त्रालङ्कारशस्त्राणि गृह्णाति ॥ ३७६ ॥ च पुनः औषधियुगलं 'धाउमढिय'न्ति त्रिधातुप्रक्षिप्तं कृत्वा भुजे बध्नाति, ततः कुमारः सुरकुमार इव–लीलया नगरे स्वच्छन्दं–स्वेच्छया भ्रमति ॥ ३७७ ॥

इओ य—कोसंबीनयरीए धवलो नामेण वाणिओ अत्थि। सो बहुधणुत्ति लोए कुबेरनामेण विक्खाओ॥
बहुकणयकोडिगाहिअकयाणगो णेगवाणिउत्तेहिं। सहिओ सो सत्थवाई भरुयच्छे आगओ अत्थि॥
जाओ य तत्थ लाहो पवरो सो तहवि दव्वलोहेणं। परकूलगमणपउणो पउणइ बहुजाणवत्ताइं॥
मज्झिमजुंगो एगो सोलसवरकूवएहिं कयसोहो। चत्तारि य लहुजुंगा चउचउकूवेहिं परिकलिआ॥
वडसफरपवहणाणं एगसयं बेडियाण अट्ठसयं। चउरासी दोणाणं चउसट्ठी वेगडाणं च॥ ३८२॥

इतश्च—कौशाम्ब्यां नगर्यां नाम्ना धवलो—धवलनामेत्यर्थः वणिक् अस्ति, स धवलो बहु धनं यस्य स बहुधन इति हेतोर्लोके कुबेरनाम्ना विख्यातः—प्रसिद्धः॥ ३७८॥ बहुभिः कनककोटिभिर्ग्राहितानि क्रयाणकानि येन स तथोक्तः, पुनरनेकैर्वणिक्पुत्रैः सहितः स सार्थपतिः—सार्थवाहो भृगुकच्छे नगरे आगतोऽस्ति ॥ ३७९॥ तत्र च भृगुकच्छे प्रवरः—प्रकृष्टो लाभो जातः, तथापि स सार्थपतिः द्रव्यलोभेन परकूले—समुद्रपरतटे गमनाय प्रवणः—तत्परः सन् बहूनि यानपात्राणि—प्रवहणानि प्रगुणयति—सज्जानि करोति॥ ३८०॥ तेषु यानपात्रेषु मध्ये एको मध्यमजुङ्गः—पोतोऽस्ति, कीदृशः?—षोडशभिः वरैः—प्रधानैः कूपकैः—कूपस्तम्भैः कृता शोभा यस्य सः, च पुनश्चत्वारो लघुजुङ्गा सन्ति, कीदृशाः?—चतुर्भिश्चतुर्भिः कूपस्तम्भैः परिकलिता—युक्ताः॥ ३८१॥ बृहत्सफरप्रवहणानां एकं शतं, बेडिकानां—नावां अष्टाधिकं शतं, द्रोणानां—नौविशेषाणां चतुरशीतिः ८४, वेगडानां—पोतविशेषाणां चतुःषष्टिः ६४॥ ३८२॥

सिल्लाणं चउपन्ना आवत्ताणं च तह य पंचासा। पणतीसं च खुरप्पा एवं सयपंचबोहित्था॥३८३॥
गहिऊण निवाएसं भरिया विविहेहिं ते कयाणेहिं। नाखुइयमालमेहिं अहिट्ठिया वाणिउत्तेहिं॥
मरजीवएहिं गब्भिल्लएहिं खुल्लासएहिं खेलेहिं। सुंकाणिएहिं सययं कयजालवणीविहिविसेसा॥
नाणविहसत्थविहत्थहत्थसुहडाण दससहस्सेहिं। धवलस्स सेवगेहिं रक्खिज्जंता पयत्तेणं॥३८६॥

सिल्लसंज्ञपोतानां चतुष्पञ्चाशत्, आवर्त्ताभिधपोतानां तथा च पञ्चाशत् ५०, च पुनः पञ्चत्रिंशत् ३५ क्षुरप्रपोताः, एवम्—उक्तप्रकारेण पञ्च शतानि बोहित्थानि—प्रवहणानि सज्जीकृतानि॥३८३॥ नृपस्यादेशं—आज्ञां गृहीत्वा ते पोता विविधैः—बहुप्रकारैः क्रयाणैर्भृताः, पुनः नाखुयिकमालिमैः—पोताधिकारिभिः तथा वणिक्पुत्रैः अधिष्ठिता—आश्रिताः॥ ३८४॥ समुद्रजले प्रविश्य ये वस्तु निष्काशयन्ति ते मरजीवका उच्यन्ते तैः, तथा गब्भिल्लकैः खुल्लासकैः खेलैः सुङ्काणिकैश्च प्रवहणसम्बन्धिस्वस्वव्यापाराधिकारिभिः सततं—निरन्तरं कृतो जालवणया विधिविशेषो येषु ते तथोक्ताः॥ ३८५॥ पुनः ते कीदृशाः पोताः?—नानाविधानि—अनेकप्रकाराणि यानि शस्त्राणि तैर्विहस्ता—व्याकुला हस्ताः—करा येषां ते तथोक्ता एवंविधा ये सुभटास्तेषां दशभिः सहस्रैर्धवलस्य सेवकैः प्रयत्नेन रक्ष्यमाणाः॥ ३८६॥

बहुचमरछत्तसिकरिधयवडवरमउडविहिअसिंगारा। सिडदोरसारनंगरपक्खरभेरीहिं कयसोहा ॥३८७॥
जलसंबलइंधणसंगहेण ते पूरिऊण सुमुहुत्ते। धवलो य सपरिवारो चडिओ चालावए जाव ॥
ताव बलीसुवि दिज्जंतयासु वज्जंततारतूरेसुं। निज्जामएहिं पोआ चालिज्जंतावि न चलंति ॥३८९॥
तत्तो सो संजाओ धवलो चिंताइ तीइ कालमुहो। उत्तरिय गओ नयरिं पुच्छइ सीकोत्तरिं चेगं॥

पुनः कीदृशास्ते पोताः ?-बहूनि चामराणि च छत्राणि च श्रीकर्य्यश्च तदाभरणविशेषा एव ध्वजपटाश्च वरमुकुटानि चेति द्वन्द्वस्तैर्विहितः शृङ्गारो येषां ते तथोक्ताः, सढो-बृहत्पटमयोपकरणविशेषः वाउदानेति प्रसिद्धः, दवरकाणि-बृहद्रज्जवः, सारनंगरो-लोहमयः पोतस्तम्भहेतूपकरणं, पक्खरः-पोतरचोपकरणं भेर्यो-दुन्दुभयस्ताभिः कृता शोभा येषां ते तथोक्ताः ॥ ३८७ ॥ जलशम्बलेंधनानां सङ्ग्रहेण तान् पोतान् पूरयित्वा सुष्ठु-शोभने मुहूर्त्ते धवलश्च सार्थपतिः सपरिवारश्चटितः सन् यावत्तांश्चालयति ॥ ३८८ ॥ तावद्देवदेवीभ्यो बलिषु-उपहारेषु दीयमानास्वपि तारेण-उच्चैःस्वरेण तूरेषु-वादित्रेषु वाद्यमानेषु निर्यामकैः-पोतवाहकैः चाल्यमाना अपि पोता न चलन्ति ॥ ३८९ ॥ ततः-तदनन्तरं स धवलस्तया चिन्तया कालं मुखं यस्य स कालमुखः सञ्जातः, तदा प्रवहणादुत्तीर्य्य नगरीगतश्च सन् एकां सीकोत्तरीं नारीं पृच्छति ॥ ३९० ॥



सा कहइ देवयाथंभियाइं एयाइं जाणवत्ताइं। बत्तीससुलक्खणनरबलीइ दिन्नाइ चल्लंति ॥३९१॥
तत्तो धवलो सुमहग्घवत्थु भिट्टाइ तोसिऊण निवं। विन्नवइ देव ! एगं बलिकज्जे दिज्जउ नरं मे ॥
रन्ना भणियं-जो कोऽवि होइ वइदेसिओ अणाहो अ। तं गिण्ह जहिच्छाए अन्नो पुण नो गहेयव्वो॥
तत्तो धवलस्स भडा जाव गवेसंति तारिसं पुरिसं। ता सिरिपालो कुमरो विदेसिओ जाणिओ तेहिं॥
बत्तीसलक्खणधरो कहिओ धवलस्स तेहिं पुरसेहिं। धवलेण पुणो रायाएसो गहिओ य तग्गहणे ॥

सा सीकोत्तरी कथयति-एतानि तव यानपात्राणि देवतया स्तम्भितानि सन्ति, द्वात्रिंशत् सुष्ठु-शोभनानि लक्षणानि यस्मिन् स द्वात्रिंशत्सुलक्षणः ईदृशो यो नरस्तस्य बलौ दत्तायां चलन्ति, नान्यथा ॥३९१॥ ततः-तदनन्तरं धवलः-सार्थपतिः सुमहार्घाणां-सुतरां बहुमूल्यानां वस्तूनां 'भिट्टाइ' त्ति ढौकनेन नृपं तोषयित्वा-सन्तुष्टं विधाय विज्ञपयति-विज्ञप्तिं करोति, हे देव ! एकं नरं-मनुष्यं बलिकार्ये-देवताबलिनिमित्तं मे-मह्यं दीयताम् ॥३९२॥ राज्ञा भणितं-यः कोऽपि वैदेशिकः-परदेशवासी च पुनः अनाथो--निःस्वामिको नरो भवति तं नरं यदृच्छया--स्वेच्छया त्वं गृहाण, अन्यः पुनर्नो ग्रहीतव्यः ॥३९३॥ ततः-तदनन्तरं धवलस्य भटा यावत्तादृशं पुरुषं गवेषयन्ति तावत् तैर्धवलस्य भटैः श्रीपालः कुमारो वैदेशिको ज्ञातः ॥३९४॥ ततस्तैः पुरुषैर्द्वात्रिंशल्लक्षणधरः श्रीपालो धवलस्य कथितो--धवलाय निवेदितः, धवलेन च तद्ग्रहणे-तस्य श्रीपालस्य ग्रहणनिमित्तं पुनरपि राजादेशो गृहीतः ॥ ३९५ ॥

॥ ४७ ॥

सो सिरिपालो चउहट्टयंमि लीलाइ संनिविट्ठोवि। धवलभडेहिं उब्भडसत्थेहिं झत्ति अक्खित्तो॥
रे रे तुरिअं चल्लसु रुट्ठो तुह अज्ज धवलसत्थवई। तं देवयाबलीए दिज्जसि मा कहसि नो कहिअं॥
कुमरेणुत्तं रे रे देह बलिं तेण धवलपसुणावि। पंचाणणेण कत्थवि किं केणवि दिज्जए हु बली? ३९८
तत्तो पयडंति भडा किंपि बलं जाव ताव कुमरकयं। सोऊण सीहनायं गोमाउगणुव्व ते नट्ठा॥
धवलस्स पेरिएणं रन्नावि हु पेसियं नियं सिन्नं। तंपि हु कुमरेण कयं हयप्पयावं खणद्धेणं॥४००॥

तदा स श्रीपालश्चतुष्पदे-वणिग्मार्गे लीलया सन्निविष्टोऽपि-आसीनोऽपि उद्भटशस्त्रैः-उत्पाटितायुधैर्धवलस्य भटैर्झटिति-शीघ्रं आक्षिप्त-आ समन्तात्प्रेरितः ॥ ३९६ ॥ कथमाक्षिप्त ? इत्याह-रे रे त्वरितं-शीघ्रं त्वं चल, अद्य तवोपरि धवलसार्थपतिः रुष्टोऽस्ति, त्वं देवताया बलौ दास्यसे, न कथितं इति मा कथयेः ॥३९७॥ तदा कुमरेणोक्तं-रे रे पामराः ! तेन धवलपशुना एव बलिं दत्त, यो धवलाख्यो भवत्स्वामी स एव पशुस्तेनैव देवतायै बलिं दत्तेत्यर्थः, परं पञ्चाननेन-सिंहेन किं कुत्रापि केनापि नरेण हु-निश्चितं बलिर्दीयते ?, सिंहेन बलिः केनापि क्वापि न दीयते इत्यर्थः ॥३९८॥ ततः-तदनन्तरं यावद्भटाः किमपि बलं प्रकटयन्ति-प्रकटीकुर्वन्ति तावत् कुमारेण कृतं कुमारकृतं सिंहनादं श्रुत्वा ते धवलभटा गोमायुगणः-शृगालसमूह इव नष्टाः-पलायिताः ॥ ३९९ ॥ धवलप्रेरितेन राज्ञापि निजं-स्वकीयं सैन्यं प्रेषितं-धवलकार्यसिद्ध्यर्थं मुक्तं, तदपि सैन्यं कुमारेण क्षणार्द्धेन-अर्द्धक्षणमध्ये हतः प्रतापो यस्य तत् हतप्रतापं कृतम् ॥ ४०० ॥

॥ ४७ ॥

धवलाएसेण भडा नरवइसिन्नेण संजुया कुमरं। वेढंति तिपंतीहिं मायाबीयंव रेहाहिं॥ ४०१ ॥
धवलो भणेइ रे रे एअं इत्थेव सत्थछिन्नतणुं। देह बलिं जेणं सा संतुस्सइ देवया अज्ज ॥ ४०२ ॥
ताण भडाणं सरसिल्लभल्लखग्गाइआ न लग्गंति। कुमरसरीरंमि अहो महोसहीणं पभावुत्ति॥४०३॥
कुमरेण पुणो तेसिं केसिंपि हु केसकन्ननासाओ। लुणिआउ निअसरेहिं करुणाइ न जीवियं हरियं॥
तं पासिऊण धवलो चिंतइ एसो न माणुसो नूणं। खयरो व सुरवरो वा कोइ इमोऽनप्पमाहप्पो॥

धवलस्यादेशेन भटा नरपतिसैन्येन संयुताः-सहिताः कुमारं तिसृभिः पंक्तिभिर्वेष्टयन्ति, काभिः किमिव ?-तिसृभिः रेखाभिर्मायाबीजं-ह्रींकारमिव ॥ ४०१ ॥ तदा धवलो भणति-रे रे भटा एतं पुरुषं अत्रैव शस्त्रेण छिन्ना तनुः-शरीरं यस्य स तथा एवंविधं संतं बलिं दत्त येनाद्य एषा देवता सन्तुष्यति-सन्तुष्टा भवेत् ॥४०२॥ तेषां नृपधवलसम्बन्धिनां भटानां शरसिल्लभल्लखड्गादिकानि-बाणभिन्दपालकुन्तकरवालादीनि शस्त्राणि इति हेतोः कुमारस्य शरीरे न लगन्ति, तत्र हेतुमाह-अहो महौषधीनां प्रभाव आश्चर्यकारीत्यर्थः ॥ ४०३ ॥ कुमारेण पुनः तेषां केषाञ्चिद्भटानां केशकर्णनासिका निजशरैः-स्वबाणैर्लूनाः-छिन्नाः परं करुणया-कारुण्येन जीवितं कस्यापि न हृतम् ॥४०४॥ एवंविधं तं श्रीपालं दृष्ट्वा धवलश्चिन्तयति, नूनं-निश्चितं एष मानुषो नास्ति, किन्तु अनल्पं-प्रचुरं माहात्म्यं यस्य सोऽनल्पमाहात्म्योऽयं कोऽपि खेचरो-विद्याधरो वा सुरवरो वाऽस्ति, महात्मनो भावो माहात्म्यं-प्रभाव इत्यर्थः ॥४०५॥

काऊण अंजलिं मत्थयंमि तो विन्नवेइ तं धवलो। देव ! तुममेरिसीए सत्तीए कोऽवि खयरोऽसि ॥४०६॥
ता मह कुणसु पसायं थंभणबेडीण मोयणोवायं। किंपि हु करेह जेणं उवयारकरा हु सप्पुरिसा ॥
कुमरेणुत्तं जइ तुह मोयाविज्जंति जाणवत्ताइं। ता किं लब्भइ सोऽविहु भणेइ दीणारलक्खंति ॥
तत्तो चल्लइ कुमरो विअसिअवयणो य लोअपरिअरिओ। चडिओ य धवलसहिओ अग्गिल्ले जाणवत्तंमि॥
निज्जामएसु नियनियपवहणवावारकरणपवणेसु। कयनवपयज्झाणेणं मुक्का हक्का कुमारेणं ॥ ४१० ॥

ततः–तदनन्तरं धवलो मस्तकेऽञ्जलिं कृत्वा तं श्रीपालं विज्ञपयति--हे देव–हे महाराज ! त्वं ईदृश्या शक्त्या कोऽपि खेचरो–विद्याधरोऽसि ॥४०६॥ तत्--तस्मात्कारणात् ममोपरि प्रसादं कुरुष्व, मम स्तम्भितबेडिकानां मोचनस्य उपायं किमपि कुरु, येन कारणेन सत्पुरुषा हु इति निश्चितं उपकारं कुर्वन्तीति–उपकारकरा भवन्ति ॥ ४०७ ॥ कुमारेणोक्तं–यदि तव यानपात्राणि–वहनानि मोच्यन्ते तत्--तर्हि किं--लभ्यते ?, तदा स धवलोऽपि भणति–दीनाराणां–सौवर्णिकानां लक्षमिति ॥४०८॥ ततः--तदनन्तरं कुमारः विकसितं वदनं–मुखं यस्य स विकसितवदनः च पुनः लोकैः परिकरितः–परिवृतः सन् चलति, च पुनः धवलेन सहितोऽग्रिमे–अग्रतने यानपात्रे चटित--आरूढः ॥ ४०६ ॥ तदा निर्यामकेषु--पोतवाहकेषु निजानिजप्रवहणव्यापारकरणे प्रवणेषु–तत्परेषु सत्सु कृतं नवपदध्यानं येन स तेन एवंविधेन कुमारेण हक्का मुक्ता–उच्चैःस्वरेण हकारवः कृत इत्यर्थः, निजो निजः–स्वकीयः स्वकीयो यः प्रवहणस्य–पोतस्य व्यापारस्तस्य करणे प्रवणा इति समासः ॥ ४१० ॥



सोऊण कुमरहक्कं सहसा सा खुद्ददेवया नट्ठा। चलियाइं पवहणाइं वद्धावणयं च संजायं ॥४११॥
वज्जंति भेरिभुंगलपमुहाउज्जाइं गहिरसद्दाइं। नच्चंति नट्टियाओ महुरं गिज्जंति गीआइं ॥ ४१२ ॥
तं अच्छरिअं दट्ठुं धवलो चिंतेइ एस जइ होइ। अम्ह सहाओ कहमवि ता विग्घं होइ न कयावि ॥४१३॥
इअ चिंतिऊण धवलो तं दीणाराण सयसहस्सं च। दाऊण विणयपणओ भणेइ भो भो महाभाग! ॥४१४॥
दीणारसहसइक्किकमित्तयं वरिसजीवणं दाउं। संगहिया संति मए दससहस भडा ससोंडीरा ॥४१५॥

कुमारस्य हक्कां श्रुत्वा सहसा–अकस्मात् सा क्षुद्रदेवता–दुष्टदेवी नष्टा–पलायिता प्रवहणानि चलितानि च पुनर्वर्द्धापनकं सञ्जातम् ॥ ४११ ॥ तथा भेरीभुङ्गलप्रमुखाणि–दुन्दुभिप्रभृतीनि आतोद्यानि–वादित्राणि वाद्यन्ते, कीदृशानि ?–गम्भीरशब्दानि तथा नर्त्तक्यः--स्त्रियो नृत्यन्ति, मधुरंयथा स्यात्तथा गीतानि गीयन्ते ॥४१२॥ तत् आश्चर्यं दृष्ट्वा धवलश्चिन्तयति-यद्येष पुमान् कथमपि–केनापि प्रकारेण अस्माकं सहायो भवति तत्तदा कदापि–कस्मिन्नपि काले विघ्नं न भवति ॥ ४१३ ॥ इति--अमुना प्रकारेण चिन्तयित्वा धवलो दीनाराणां शतसहस्रं–लक्षं च कुमाराय दत्त्वा विनयेन प्रणतो–नम्रीभूतः सन् तं कुमारं भणति–भो भो महाभाग ! हे महाभाग्यवान् ॥ ४१४ ॥ एकैकदीनारसहस्रमात्रं वर्षस्य जीवनं–आजीविकां दत्त्वा मया शौण्डीर्येण–पराक्रमेण सह वर्त्तमानाः सशौण्डीर्या दशसहस्रभट्टाः सङ्गृहीताः सन्ति ॥ ४१५ ॥

49


वारंतस्सवि धवलस्स तस्स कुमरो समत्थपरिवारो। पत्तो महकालपुरं तोरणमंचाइकयसोहं ॥४६३॥
महकालो तं कुमरं भत्तीइ नियासणंमि ठावित्ता । पभणेइ इमं रज्जं मह पाणावि हु तुहायत्ता ॥
अन्नं च मज्झ पुत्ती पाणेहिंतोऽवि वल्लहा अत्थि। नामेण मयणसेणा तं च तुमं पसिय परिणेसु॥
कुमरेणं भणियमहं विदेसिओ तह अनायकुलसीलो। तस्स कहं नियकन्ना दिज्जइ सम्मं विआरेसु?॥
पभणेइ महाकालो आयारेणावि तुह कुलं नायं। न य कारणं विएसो कुणसु इमं पत्थणं सहलं॥

तस्य धवलस्य वारयतोऽपि सतः-एतावता वारयन्तमपि धवलमनादृत्येत्यर्थः समस्तः-सम्पूर्णः परिवारो यस्य स एवंविधः कुमारो महाकालभूपस्य पुरं प्राप्तः, कीदृशं पुरं ?-तोरणमञ्चादिभिः कृता शोभा यस्य तत् तथोक्तम् ॥ ४६३ ॥ अथ महाकालो नृपस्तं कुमारं भक्त्या निजासने स्थापयित्वा-उपवेश्य प्रकर्षेण भणति-इदं राज्यं त्वदायत्तं-तवाधीनमस्ति, किं बहुना ?, हु इति निश्चितं मम प्राणा अपि त्वदायत्ताः-त्वदधीनाः सन्ति ॥४६४॥ अन्यच्च-प्राणेभ्योऽपि वल्लभा नाम्ना मदनसेना मम पुत्री अस्ति, तां च मम पुत्रीं त्वं प्रसद्य-प्रसन्नीभूय परिणयस्व ॥ ४६५ ॥ कुमारेण भणितं-अहं वैदेशिकस्तथाऽज्ञाते कुलशीले यस्य सोऽज्ञातकुलशीलोऽस्मि, तस्मै मह्यं निजकन्या कथं दीयते ?, सम्यग् विचारय ॥ ४६६ ॥ एवं कुमारेणोक्ते सति महाकालः प्रभणति-अस्माभिस्तु आचारेणापि तव कुलं ज्ञातं, पुनस्त्वया स्वस्य वैदेशिकत्वमुक्तं तत्रोच्यते-न च विदेशः कारणं कन्याऽप्रदाने इति शेषः, तस्मात् इमां प्रार्थनां सफलां कुरुष्व ॥ ४६७ ॥



इअ भणिऊण कुमारो अप्फालेऊण धणुमहारयणं। मिल्हंतो सरनिअरं पाडइ केउं नरिंदस्स ॥४४८॥
तो बब्बरसुहडेहिं विहिओ सरमंडवो गयणमग्गे। तहवि न लग्गइ अंगे इक्कोवि सरो कुमारस्स॥
कुमरसरेहिं ताडिअदेहा ते बब्बराहिवइसुहडा। केऽवि हु पडंति केवि हु भिडंति नासंति केवि पुणो॥
महकालोवि नरिंदो मिल्हइ सयहत्थियं सहत्थेणं। सोवि न लग्गइ ओसहिपभावओ कुमरअंगंमि॥
तो वेगेणं कुमरो गहिउं सयहत्थियं तयं चेव। अप्फालिऊण पाडइ भूमीए बब्बराहिवइं ॥४५२॥

इत्येवं भणित्वा-उक्त्वा कुमारः स्वकीयं धनुर्महारत्नं आस्फाल्य शरनिकरं-बाणसमूहं मुञ्चन्-बाणवृष्टिं कुर्वन्नित्यर्थः, नरेन्द्रस्य-राज्ञः केतुं-पुरोवर्त्तिध्वजं पातयति ॥४४८॥ ततो बब्बरदेशाधिपसुभटैर्गगनमार्गे-आकाशमार्गे शराणां-बाणानां मण्डपो विहितः-कृतः, तथापि कुमारस्य अङ्गे एकोऽपि शरो न लगति ॥४४९॥ कुमारस्य शरैस्ताडितो देहो येषां ते एवंविधास्ते बब्बराधिपते सुभटाः केऽपि पतन्ति, केऽपि च 'भिडन्ती' ति अन्योऽन्यं शरीरसंस्पर्शेन एकत्रीभवन्ति, केऽपि पुनर्नश्यन्ति-पलायन्ते ॥ ४५० ॥ महाकालोऽपि नरेन्द्रो-राजा स्वहस्ते भवं सौवहस्तिकं-शस्त्रविशेषं स्वहस्तेन मुञ्चति, सोऽपि शस्त्रविशेषः ओषधिप्रभावतः कुमारस्य अङ्गे न लगति ॥ ४५१ ॥ ततः कुमारो वेगेन तदेव राज्ञः सौवहस्तिकं शस्त्रं-गृहीत्वा आस्फाल्य च बब्बराधिपतिं भूमौ पातयति ॥ ४५२ ॥

एगे मवंति धुवमंडलं च एगे हरंति थागत्तं। एगे मवंति वेलं एगे मग्गं पलोयंति ॥ ४२५ ॥
कत्थवि दट्ठुं मगरं एगे वायंति ढुक्कलुक्काइं। एगे य अग्गितिल्लं खिवंति लहुढिंकलीआहिं ॥४२६॥
चोराण वाहणाइं दट्ठुं निययाइं पक्खरिज्जंति। पंजरिएहिं भडेहिं चोरा दूरे गमिज्जंति॥ ४२७ ॥
उग्गमणं अत्थमणं रविणो दीसेइ जलहिमज्झंमि। वडवानलपज्जलिया दिसाउ दिसंति रयणीसु ॥

पुनस्तदा एके-केचन पोतवाहका ध्रुवमण्डलं-ध्रुवतारकमण्डलं मिमते-मानविषयं कुर्वन्ति, च पुनः एके-केचन थागत्तं हरन्ति-अंतःप्रविष्टं जलं निष्कासयंति, तथा एके काष्ठप्रयोगेण जलधेर्वेलां मिमतेऽन्ये पुनरेके मार्ग्गं प्रलोकन्ते-निरीक्षन्ते ॥ ४२५ ॥ कुत्रापि मकरं-महामत्स्यविशेषं दृष्ट्वा एके केचन लोका ढुक्कलुकानि-ढुक्कलुकाख्यान् चर्मावनद्धवाद्यविशेषान् वादयन्ति, च पुनः एके लोका लघुभिर्ढिङ्कलिकाभिः-पात्रविशेषैः अग्नौ तैलं क्षिपन्ति, एतावता वाद्यशब्दं श्रुत्वाऽग्निज्वालां च विलोक्य मकरा दूरतः प्रयान्तीति भावः ॥ ४२६ ॥ क्वचित्प्रदेशे चौराणां वहनानि-पोतान् दृष्ट्वा निजकानि-स्वकीयानि वहनानि पञ्जरीकैः-तदधिकारिविशेषैः '(प) क्खरिज्जन्ती' ति-सन्नद्धानि कार्यन्ते, ततो भटैः-वीरपुरुषैः चौरा दूरे गम्यन्ते गमनं कार्यन्ते ॥ ४२७ ॥ पुनस्तदा रवेः-सूर्यस्य उद्गमनमुदयः अस्तंगमनमस्तमयनं द्वे अप्येते जलधिमध्ये-समुद्रान्तः एव दृश्येते, तथा रजनीषु-रात्रिषु वडवानलेन-समुद्रोत्थवह्निविशेषेण ज्वलिता दिशो दृश्यन्ते ॥ ४२८ ॥

एवंविहाइं कोऊहलाइं पिक्खंतओ समुद्दस्स। जा वच्चइ कुमरवरो ता पंजरिओ भणइ एवं ॥
भो भो जइ जलइंधणपमुहेहिं किंपि अत्थि तुम्हाणं। कज्जं ता कहह फुडं बब्बरकूलं समणुपत्तं ॥
संजत्तिएहिं भणिअं बब्बरकूलस्स मंदिराभिमुहं। वच्चह जेण जलाइं गिण्हामो मा विलंबेह ॥ ४३१ ॥
पत्ता य तत्थ लोआ सपमोआ उत्तरंति भूमीए। दससहसभडसमेओ धवलोवि ठिओ तडमहीए ॥
इत्थंतरंमि तेसिं हलबोलं सुणिअ आगया तत्थ। बब्बररायनिउत्ता बंदिरलागत्थिणो पुरिसा ॥४३३॥

एवंविधानि-एतादृशानि समुद्रस्य कुतूहलानि-कौतुकानि प्रेक्षमाणः-पश्यन् यावत् कुमारवरः-कुमारश्रेष्ठः श्रीपालो व्रजति तावत्पञ्जरिक-ऊर्ध्वपञ्जरस्थः पुमान् एवं-वक्ष्यमाणप्रकारेण भणति-वक्ति ॥४२९॥ भो भो लोकाः! यदि युष्माकं जलेन्धनप्रमुखैः किमपि कार्यमस्तित तर्हि स्फुटं-प्रकटं यूयं कथयत यतो बब्बरकूलं समनुप्राप्तं-बब्बरकूलाख्यं बिन्दरं सम्प्राप्तमस्तीत्यर्थः ॥ ४३० ॥ एतद्वचनं श्रुत्वा सांयात्रिकैः-पोतवणिग्भिर्भणितं-उक्तं बर्ब्बरकूलस्य बिन्दराभिमुखं व्रजत-यूयं चलत येन जलादिकं गृह्णीमः अत्रार्थे मा विलम्बध्वं-विलम्बं मा कुरुतेत्यर्थः ॥४३१॥ तत्र बिन्दरे प्राप्ताश्च लोकाः सप्रमोदाः-सहर्षाः सन्तो भूम्यां उत्तरन्ति, तदा दशसहस्रभटैः समेतः-सहितो धवलोऽपि श्रेष्ठी तटमह्यां-समुद्रतटभूमौ स्थितः ॥४३२॥ अत्रान्तरे-अस्मिन्नवसरे तेषां-पोतमनुजानां हलबोलं-अव्यक्तध्वनिं श्रुत्वा तत्र-प्रदेशे बर्ब्बरराजेन नियुक्ताः-अधिकारिणः कृता बन्दिरलागार्थिनो-बन्दिरलागग्राहकाः पुरुषाः आगताः, लागो-राजदेयं-द्रव्यम् ॥ ४३३ ॥

॥५१॥ मग्गंताणवि तेसिं लागं नो देइ जाव सो सिट्ठी। ता तेहिं महाकालो वहाविओ बब्बराहिवई ॥
महाकालो भूरिबलो तत्थ गंतूण मग्गए लागं। सिट्ठी न देइ पद्धरपएहिं सुहडे पचारेइ ॥ ४३५ ॥
तो धवलभडा उब्भडसत्था सहसत्ति बब्बरभडेहिं। जुज्झंति जओ लोए मरंति पचारिआ सुहडा॥
पढमं धवलभडेहिं भग्गं महकालभडबलं सयलं। तो महकालनिवेणं उट्ठिअं सबलतुरएणं॥

मार्गयतां—याचमानानामपि तेषां राजपुरुषाणां यावत् स श्रेष्ठी लागं न ददाति तावत् तैः पुरुषैर्महाकालो नाम बर्बराधिपतिः—बर्बरकूलस्वामी अवधावितः तत्र गमनार्थं प्रेरित इत्यर्थः ॥४३४॥ ततो भूरि—प्रचुरं बलं—सैन्यं यस्य स एवंविधो महाकालो राजा तत्र—बिन्दरे आगत्य लागं मार्गयति, परं धवलः श्रेष्ठी न ददाति, किन्तु प्रधरपदैः सुभटान् प्रचारयति—युद्धार्थं प्रेरयति ॥४३५॥ ततः—तदनन्तरं उद्भटानि—भयजनकानि शस्त्राणि येषां ते एवंविधा धवलभटाः सहसा इति—सद्यस्तत्क्षणमित्यर्थः बर्बरराजस्य भटैः सह युद्ध्यन्ते—युद्धं कुर्वन्ति, यतो—यस्मात्कारणात् लोके सुभटाः प्रचारिताः—पौरुषोत्पादकवचनैः प्रेरिताः सन्तो म्रियन्ते, स्वस्वामिनोऽग्रे प्राणान् त्यजन्तीत्यर्थः ॥ ४३६ ॥ तदा प्रथमं धवलस्य भटैः सकलं—समस्तं महाकालराजस्य भटानां बलं—सैन्यं भग्नं, ततः—तदनन्तरं महाकालनृपेण सबलो—बलवान् तुरगः—अश्वो यस्य स तेन अश्वरत्नारूढेन सता उत्थितं स्वयं युद्धाय गम्यते स्मेत्यर्थः ॥ ४३७ ॥ ॥ ५१ ॥

नट्ठं धवलभडेहिं बब्बरवइतेअमसहमाणेहिं। पयचारी जुज्झंतो धवलो पुण पाडिओ बद्धो ॥४३८॥
तं बंधिऊण रुक्खे राया सुहडे निओइऊण निए। सत्थस्स रक्खणत्थं सयं च चलिओ पुराभिमुहं॥
इत्थंतरंमि कुमरो धवलं बुल्लावए कहसु इण्हि। ते सुहडा कत्थ गया जेसिं दिन्ना तए कोडी ॥ ?
धवलो भणेइ—भो भो खयंमि किं कुणसि खारपक्खेवं ?। किं वा दड्ढाणुवरिं फोडयदाणक्कियं कुणसि ?॥
तो कुमरो भणइ फुडं अज्जवि जइ कोऽवि तुज्झ सव्वस्सं। वालेइ तस्स किं देसि ? मज्झ साहेसु तं सव्वं॥४४२॥

तदा बर्बरपतेः—बर्बरकूलस्वामिनो राज्ञस्तेजोऽसहमानैर्धवलस्य भटैर्नष्टं—प्रतिदिशं भग्नं, ततः पदचारी सन् युध्यमानो धवलः पुनः पातितो बद्धश्च ॥ ४३८ ॥ राजा—महाकालस्तं—धवलं वृक्षे बन्धयित्वा सार्थस्य रक्षणार्थं निजान्—स्वकीयान् सुभटान् नियोज्य—संस्थाप्य स्वयम्—आत्मना च पुराभिमुखं चलितः ॥४३९॥ अत्रान्तरे—अस्मिन्नवसरे श्रीपालकुमारो धवलं जल्पयति, अहो धवल ! त्वं कथय इदानीं—साम्प्रतं ते सुभटाः कुत्र गता ? येभ्यस्त्वया दीनाराणां कोटिर्दत्ता ॥४४०॥ तदा धवलो भणति—भो भो क्षते—प्रहतेऽङ्गे क्षारस्य प्रक्षेपं किं करोषि—कथं विदधासीत्यर्थः, वाऽथवा दग्धानामुपरि स्फोटकदानक्रियां किं करोषि ? इदमयुक्तं भवादृशानामित्यर्थः ॥ ४४१ ॥ ततः—तदनन्तरं कुमारः स्फुटं—प्रकटं भणति, भो श्रेष्ठिन् ! अद्यापि यदि कोऽपि तव सर्वस्वं वालयति तर्हि तस्मै त्वं किं ददासि ? मह्यं तत् सत्यं कथय ॥ ४४२ ॥

धवलो भणेइ न हु संभवेइ एवं तहावि तस्स अहं। देमि सव्वस्सअद्धं इत्थ पमाणं परमपुरिसो ॥
तो कुमरो धणुहकरो अंसेसुऽणुबद्धउभयतूणीरो। बुल्लावइ महकालं पिट्ठी गंतूण इक्किल्लो ॥४४४॥
भो बब्बरदेसाहिव! एवं गंतुं न लब्भए इण्हिं। ता वलिऊण बलं मे पिक्खसु खणमित्तमिक्कस्स ॥
तो वलिओ महकालो पभणइ बालोऽसि दंसणीओऽसि। वररूवलक्खणधरो मुहियाइ मरेसि किं इक्को?॥
कुमरोवि भणइ–नरवर! इअ वयणाडंबरेण काउरिसा। भज्जंति तुह सरेहिंवि मह हिययं कंपए नेव ॥

तदा धवलो भणति–हु इति निश्चये एवं न सम्भवत्येव–गतस्य पश्चाद्वलनं कुतोऽपि इत्यर्थः, तथापि यो मम सर्वस्वं वालयति तस्मै अहं सर्वस्वस्य–सर्वद्रव्यस्य अर्द्धं ददामि, अत्र परमपुरुषः–परमेश्वरः प्रमाणं–साक्षीत्यर्थः ॥४४३॥ ततः–तदनन्तरं धनुः–कोदण्डं करे–हस्ते यस्य स धनुःकरः, तथाऽंसयोः–स्कन्धयोः अनुबद्धौ–पश्चाद्बद्धौ उभौ–द्वौ तूणीरौ–शराश्रयौ येन स एवंविधः कुमारः एकाकी सन् पृष्ठौ गत्वा महाकालं राजानं जल्पयति ॥४४४॥ कथं जल्पयतीत्याह–भो बर्बराधिप! इदानीं–साम्प्रतं एवम्–अमुना प्रकारेण गन्तुं त्वया न लभ्यते–न प्राप्यते, तस्माद्वलित्वा क्षणमात्रं एकस्य मम बलं प्रेक्षस्व॥४४५॥ ततो वलितो महाकालः प्रभणति–प्रकर्षेण वक्ति–त्वं बालोऽसि पुनः दर्शनीयोऽसि–द्रष्टुं योग्योऽसि तथा रूपं च लक्षणानि धरतीति धर एवंविधस्त्वं एकः एकाकी मुधिकया–वैयर्थ्येन किं म्रियसे? ॥४४६॥ तदा कुमारोऽपि भणति–हे नरवर–हे राजन्! इत्येतद्वचनाडम्बरेण कापुरुषाः–कातरा नरा भज्यन्ते, मम हृदयं तव शरैः–बाणैरपि नैव कम्पतेऽतो वृथा वागाडम्बरं मा कृथाः–ममापि हस्तौ पश्येत्यर्थः ॥ ४४७ ॥

इअ भणिऊण कुमारो अप्फालेऊण धणुमहारयणं। मिल्हंतो सरनिअरं पाडइ केउं नरिंदस्स ॥४४८॥
तो बब्बरसुहडेहिं विहिओ सरमंडवो गयणमग्गे। तहवि न लग्गइ अंगे इक्कोवि सरो कुमारस्स ॥
कुमरसरेहिं ताडिअदेहा ते बब्बराहिवइसुहडा। केऽवि हु पडंति केवि हु भिडंति नासंति केवि पुणो ॥
महकालोवि नरिंदो मिल्हइ सयहत्थियं सहत्थेणं। सोवि न लग्गइ ओसहिपभावओ कुमरअंगंमि ॥
तो वेगेणं कुमरो गहिउं सयहत्थियं तयं चेव। अप्फालिऊण पाडइ भूमीए बब्बराहिवइं ॥४५२॥

इत्येवं भणित्वा–उक्त्वा कुमारः स्वकीयं धनुर्महारत्नं आस्फाल्य शरनिकरं–बाणसमूहं मुञ्चन्–बाणवृष्टिं कुर्वन्नित्यर्थः, नरेन्द्रस्य–राज्ञः केतुं–पुरोवर्त्तिध्वजं पातयति ।.४४८॥ ततो बर्ब्बरदेशाधिपसुभटैर्गगनमार्गे–आकाशमार्गे शराणां–बाणानां मण्डपो विहितः–कृतः, तथापि कुमारस्य अङ्गे एकोऽपि शरो न लगति ॥४४९॥ कुमारस्य शरैस्ताडितो देहो येषां ते एवंविधास्ते बर्ब्बराधिपते सुभटाः केऽपि पतन्ति, केऽपि च 'भिडन्ती' ति अन्योऽन्यं शरीरसंस्पर्शेन एकत्रीभवन्ति, केऽपि पुनर्नश्यन्ति–पलायन्ते ॥ ४५० ॥ महाकालोऽपि नरेन्द्रो–राजा स्वहस्ते भवं सौवहस्तिकं–शस्त्रविशेषं स्वहस्तेन मुञ्चति, सोऽपि शस्त्रविशेषः ओषधिप्रभावतः कुमारस्य अङ्गे न लगति ॥ ४४१ ॥ ततः कुमारो वेगेन तदेव राज्ञः सौवहस्तिकं शस्त्रं–गृहीत्वा आस्फाल्य च बर्ब्बराधिपतिं भूमौ पातयति ॥ ४५२ ॥

॥ ५३ ॥

तं बंधिऊण कुमरो आणइ जा निअयसत्थपासंमि। तं दट्ठुं ते नट्ठा सत्थाहिवरक्खगा पुरिसा ॥४५३॥
धवलो बंधविमुक्को खग्गं घित्तूण धावए सिग्घं। महकालमारणत्थं सिरिपालो तं निवारेइ ॥४५४॥
गेहागयं च सरणागयं च बद्धं च रोगपरिभूयं। नस्संतं बुड्ढं बालयं च न हणंति सप्पुरिसा ॥
जे दससहस्ससुहडा बब्बरसुहडेहिं ताडिया नट्ठा। तेसिं रुट्ठो सिट्ठी जीवणवित्तीउ भंजेइ ॥४५६॥
ते सव्वेवि हु कुमरस्स तस्स मुहिआइ सेवगा जाया। कुमरेण ते निउत्ता निअभागागयपवहणेसु ॥

ततस्तं-राजानं बद्ध्वा कुमारो यावत् निजकसार्थपार्श्वे आनयति तावत्तं स्वनृपं बद्धं दृष्ट्वा ते सार्थाधिपस्य-धवलस्य रक्षकाः पुरुषा नष्टाः-पलायिताः ॥ ४५३ ॥ अथ धवलो बंधविमुक्तः सन् खड्गं गृहीत्वा महाकालस्य राज्ञो मारणार्थं शीघ्रं-सत्वरं धावति, तदा श्रीपालकुमारस्तं धवलं निवारयति-वर्जयति ॥४५४॥ किमुक्त्वा निवारयतीत्याह-अहो श्रेष्ठिन्! गेहागतं-स्वगृहमागतं च पुनः शरणागतं च पुनः बद्धं च पुनः रोगेण परिभूतं-पीडितं पुनर्नश्यन्तं-पलायमानं तथा वृद्धं-जरसाभिभूतं च पुनः बालकं एतान् पुरुषान् वैरिणोऽपि सत्पुरुषा न घ्नन्ति-न मारयन्ति, इति नीतिवचनात् अयमपि गृहागतत्वेन बद्धत्वेन च अवध्य इति भावः ॥ ४५५ ॥ ये दशसहस्रसुभटा बर्बरभूपसुभटैस्ताडिताः सन्तो नष्टाः तेषामुपरि श्रेष्ठी रुष्टः सन् तेषां जीवनवृत्तीर्भनक्ति-निषेधयति ॥४५६॥ ततस्ते सर्वेऽपि भटा अन्यां गतिमलभमानाः तस्य कुमारस्य मुधिकया-विना मूल्येनैव सेवका जाताः, तदा कुमारेण ते सुभटा निजभागे आगतेषु प्रवहणेषु-पोतेषु नियुक्ता-अधिकारिणः कृताः ॥ ४५७ ॥ ॥ ५३ ॥

सयमेव महाकालं बंधाओ मोइऊण सिरिपालो। निअभागपवहणाणं वत्थाईहिं तमच्चेइ ॥४५८॥
सव्वेवि हु ते सुहडा पहिराविऊण पवरवत्थेहिं। संतोसिऊण मुक्का कुमरेण विवेअवंतेण ॥४५९॥
महकालोवि हु दट्ठूण तस्स कुमारस्स तारिसं चरिअं। चित्ते चमक्किओ तं अब्भत्थइ विणयवयणेहिं ॥
पुरिसुत्तम! मह नयरं नियचरणेहिं तुमं पवित्तेहिं। अम्हेवि जेण तुम्हं नियभत्तिं किंपि दंसेमो॥
कुमरो दक्खिन्ननिही जा मन्नइ ता पुणो धवलसिट्ठी। वारेइ घणं कुमरं सव्वत्थवि संकिया पावा ॥

अथ श्रीपालः स्वयमेव महाकालं-राजानं बन्धनात् मोचयित्वा निजभागप्रवहणानां वस्त्रादिभिः-तन्मध्यगतवस्त्राभरणादिकैस्तं-महाकालं नृपं अर्चति-सत्करोति ॥४५८॥ पुनर्विवेकवता कुमारेण ते सर्वेऽपि सुभटाः प्रवरवस्त्रैः परिधाप्य सन्तोष्य मुक्ताः ॥ ४५९ ॥ महाकालोऽपि नृपस्तस्य-कुमारस्य तादृशं चरितं-आचारं दृष्ट्वा चित्ते चमत्कृतः-चमत्कारं प्राप्तः सन् तं कुमारं विनययुक्तवचनैः अभ्यर्थयते-प्रार्थयते ॥ ४६० ॥ हे पुरुषोत्तम! त्वं निजचरणैर्मम नगरं पवित्रय-पवित्रीकुरु येन कारणेन वयमपि युष्मभ्यं कामपि निजभक्तिं दर्शयामः ॥४६१॥ दाक्षिण्यं-परचित्तानुकूल्यं तस्य निधिः-निधानं कुमारो यावन्मन्यते-नृपवचनमङ्गीकुरुते तावत्पुनः धवलश्रेष्ठी कुमारं घनं-प्रचुरं वारयति शत्रुगृहे सर्वथा न गन्तव्यं इत्यादिवाक्यैः, कथमित्यत्राह-यतः पापाः-दुष्टाः प्राणिनः सर्वत्रापि शङ्किताः स्युः ॥ ४६२ ॥

वारंतस्सवि धवलस्स तस्स कुमरो समत्थपरिवारो। पत्तो महकालपुरं तोरणमंचाइकयसोहं ॥४६३॥
महकालो तं कुमरं भत्तीइ नियासणंमि ठावित्ता । पभणेइ इमं रज्जं मह पाणावि हु तुहायत्ता ॥
अन्नं च मज्झ पुत्ती पाणेहिंतोऽवि वल्लहा अत्थि। नामेण मयणसेणा तं च तुमं पसिय परिणेसु॥
कुमरेणं भणियमहं विदेसिओ तह अनायकुलसीलो। तस्स कहं नियकन्ना दिज्जइ सम्मं विआरेसु?॥
पभणेइ महाकालो आयारेणावि तुह कुलं नायं। न य कारणं विएसो कुणसु इमं पत्थणं सहलं॥

तस्य धवलस्य वारयतोऽपि सतः-एतावता वारयन्तमपि धवलमनादृत्येत्यर्थः समस्तः-सम्पूर्णः परिवारो यस्य स एवंविधः कुमारो महाकालभूपस्य पुरं प्राप्तः, कीदृशं पुरं ?-तोरणमञ्चादिभिः कृता शोभा यस्य तत् तथोक्तम् ॥४६३॥ अथ महाकालो नृपस्तं कुमारं भक्त्या निजासने स्थापयित्वा-उपवेश्य प्रकर्षेण भणति-इदं राज्यं त्वदायत्तं-तवाधीनमस्ति, किं बहुना ?, हु इति निश्चितं मम प्राणा अपि त्वदायत्ताः-त्वदधीनाः सन्ति ॥४६४॥ अन्यच्च-प्राणेभ्योऽपि वल्लभा नाम्ना मदनसेना मम पुत्री अस्ति, तां च मम पुत्रीं त्वं प्रसद्य-प्रसन्नीभूय परिणयस्व ॥ ४६५ ॥ कुमारेण भणितं-अहं वैदेशिकस्तथाऽज्ञाते कुलशीले यस्य सोऽज्ञातकुलशीलोऽस्मि, तस्मै मह्यं निजकन्या कथं दीयते ?, सम्यग् विचारय ॥ ४६६ ॥ एवं कुमारेणोक्ते सति महाकालः प्रभणति-अस्माभिस्तु आचारेणापि तव कुलं ज्ञातं, पुनस्त्वया स्वस्य वैदेशिकत्वमुक्तं तत्रोच्यते-न च विदेशः कारणं कन्याऽप्रदाने इति शेषः, तस्मात् इमां प्रार्थनां सफलां कुरुष्व ॥ ४६७ ॥



आमंति कुमारेणं भणिए महया महूसवेण निवो। परिणावइ नियधूयं देइ सिरिं भूरिवित्थारं ॥
नवनाडयाइं दाइज्जयंमि दाऊण चारुवत्थेहिं। परिहावइ परिवारं कुमरेण सहागयं सयलं॥ ४६९॥
एगं च महाजुंगं वाहणरयणं च मंदिरे पत्तं। काऊण कुमरसहिओ रायावि समागओ तत्थ ॥४७०॥
सिट्ठीवि महाजुंगं दट्ठुं चउसट्ठिकूवयसणाहं। मणिकंचणपडिपुन्नं चिन्तइ निययंमि हिययंमि।

तदा कुमारेण आममिति भणिते सति-अङ्गीकृतमित्युक्ते सति महता महोत्सवेन-अतिमहोत्सवेन नृपो-महाकालभूपो निजपुत्रीं परिणाययति-उद्वाहयन्ति, भूरिः-बहु विस्तारो यस्याः सा भूरिविस्तारा तां श्रियं-लक्ष्मीं ददाति ॥ ४६८ ॥ परिणयनकाले वधूवरयोर्देयद्रव्ये नवसङ्ख्यानि नाटकानि दत्त्वा कुमारेण सह-सार्द्धं आगतं सकलं-समस्तं परिवारं चारुवस्त्रैः-मनोज्ञदुकूलादिभिः परिधापयति ॥ ४६९ ॥ च पुनः एकं महाजुङ्गनामकं वाहनरत्नं-प्रधानयानपात्रं बिन्दरे प्राप्तं कृत्वा कुमारसहितो राजापि तत्र-बिन्दरे समागतः ॥ ४७० ॥ अथ धवलाख्यश्रेष्ठी अपि चतुष्षष्ट्या कूपकैः-कूपस्तम्भैः सनाथं-सहितं पुनः मणिकाञ्चनैः प्रतिपूर्णं महाजुंगं-यानपात्रं दृष्ट्वा निजके-स्वकीये हृदये-मनसि चिन्तयति-विचारयति । किं चिन्तयति ? इत्याह- ॥ ४७१ ॥

१ आमिति निपातोऽङ्गीकारार्थे.

अहह किमेयं जायं जं एसो मज्झ सेवगसमाणो। सामित्तमिमं पत्तो भायडमित्तं न मे दाही ॥४७२॥
इअ चिंतिय सो जायइ कुमरं गयमासभाडयं सोऽवि। दावेइ दसगुणं तं ही केरिसमंतरं तेसिं? ॥
आरोविऊण कुमरं तत्थ महापवहणे सपरिवारं। मुकलाविऊण धूयं महकालो जाइ नियनयरिं ॥
पोएण जणा जलहिं लंघिय पावंति रयणदीवं तं। जह संजमेण मुणिणो संसारं तरिय सिवठाणं ॥
तत्थ य पोए तडमंदिरेसु गुरुनंगरेहिं थंभित्ता। उत्तारिऊण भंडं पडमंडवमंडले ठवियं ॥ ४७६ ॥

अहहेति खेदे एतत्किं जातं यत्–यस्मात्कारणात् एषः–श्रीपालो मम सेवकसमानः–अनुचरतुल्य इदं–स्वामित्वं प्राप्तः, अथ भाटकमेव–भाटकमात्रं मे–मह्यं न दास्यति ॥ ४७२ ॥ इति चिन्तयित्वा–विचार्य सः–धवलः कुमारं गतमासस्य भाटकं याचते, सः–कुमरोऽपि तद् भाटकं दशगुणं दापयति, ही इति विस्मये तयोर्द्वयोः–कुमारश्रेष्ठिनोः कीदृशमन्तरं ?, महान् भेद इत्यर्थः ॥ ४७३ ॥ अथ महाकालो राजा तत्र महाप्रवहणे–बृहद्यानपात्रे सपरिवारं कुमारं आरोप्य पुत्रीं मुकलाप्य–पुत्र्या [1]मुकलापं कृत्वा निजनगरीं याति ॥ ४७४ ॥ जना–लोकाः पोतेन–प्रवहणेन जलधिं–समुद्रं लङ्घित्वा तं प्रसिद्धं रत्नद्वीपं प्राप्नुवन्ति, तत्र दृष्टान्तमाह–यथा मनुयः संयमेन संसारं तीर्त्वा शिवस्थानं–मुक्तिपदं प्राप्नुवन्ति तथेत्यर्थः ॥ ४७५ ॥ तत्र च–रत्नद्वीपे तटबिन्दरेषु पोतान् गुरुनंगरैः–लोहमयबृहत्पोतस्तम्भनोपकरणैः स्तम्भित्वा–रुध्वा तन्मध्यस्थं भाण्डं–क्रयाणकं उत्तार्य पटमण्डपानां–पटगृहाणां मण्डले–समूहे स्थापितम् ॥ ४७६ ॥

१ मुकलाप इत्ययं देशीवचनः

कुमरोवि सपरिवारो पडवंसावासमज्झमासीणो। पिक्खेइ नाडयाइं विमाणमज्झट्ठियसुरुव्व ॥४७७॥
सिट्ठीवि तंमि दीवे बहुलाभं मुणिय विन्नवइ कुमरं। देव ! निअवाहणाणं कयाणगे किं न विक्केह ? ॥
तो भणइ कुमारो ताय ! अम्हतुम्हाण अंतरं नत्थि। तं चिअ कयाणगाणं जं जाणसि तं करिज्जासु ॥
हिट्ठो सिट्ठी चिंतइ हुं हुं निअजाणियं करिस्सामि। जेण कयविक्कओ च्चिय वणिणो चिंतामणिं बिंति
इत्तो अ कोऽवि पुरिसो सुरसरिसो चारुरूवनेवत्थो। सुपसन्ननयणवयणो उत्तमहयरयणमारूढो ॥

कुमारोऽपि स्वपरिवारसहितः पटवंशावासमध्यं–वंशयुक्तपटगृहस्य मध्ये आसीनः–उपविष्टः सन् नाटकानि प्रेक्षते–पश्यति, क इव ?–विमानमध्यस्थितः सुरो–देव इव ॥४७७॥ श्रेष्ठी अपि तस्मिन् द्वीपे बहुलाभं मुणित्वा–ज्ञात्वा कुमारं विज्ञपयति–हे देव !-हे महाराज ! निजवाहनानां–स्वकीयपोतानां क्रयाणकानि किं नाम–कथं न विक्रीणासि ॥ ४७८ ॥ ततः कुमारो भणति–हे तात ! अस्माकं युष्माकं च अन्तरं नास्ति, त्वमेव क्रयाणकानां यज्जानासि तत् कुरुष्व ॥ ४७९ ॥ एतत् श्रीपालवचः श्रुत्वा श्रेष्ठी हृष्टः सन् चिन्तयति–अथाहं निजज्ञातं करिष्यामि, येन कारणेन वणिजो–व्यापारिणः क्रययुक्तो विक्रयः–क्रयविक्रयः, क्रयविक्रय एव चिन्तामणिं–वाञ्छितार्थसाधकरत्नं ब्रुवन्ति लोकाः ॥ ४८० ॥ इतश्च कोऽपि पुरुषः सुरसदृशो–देवतुल्यः पुनः रूपं–आकृतिः नेपथ्यं–वेषः चारुणी–मनोज्ञे रूपनेपथ्ये यस्य सः पुनः नयने च वदनं च नयनवदनं, सुप्रसन्नं नयनवदनं–नेत्रमुखं यस्य सः पुनः उत्तमं हयरत्नं–अश्वरत्नं आरूढः ॥ ४८१ ॥

बहुपरिअरपरिअरिओ पत्तो कुमरस्स गुड्डरदुवारं। पिक्खेइ नाडयं जा तो सो कुमरेण आहूओ ॥
सो कयकुमरपणामो आसणदाणेण लद्धसम्माणो। विणयपरो वीसत्थो उवविट्ठो कुमरपासंमि॥
सुरपिच्छणयसरिच्छं तं पिच्छणयं पलोइऊण खणं। चिंतइ एस इमाए लीलाए कोवि रायसुओ ॥
थक्कंमि नाडए सो पुट्ठो कुमरेण कोऽसि भद्द ! तुमं?। कत्थ पुरे तुह वासो? दिट्ठं अच्छेरयं किंपि? ॥
सो जंपइ विणयपरो कुमरं पइ देव! इत्थ दीवंमि। सेलोऽत्थि रयणसाणु वलयागारेण गुरुसिहरो॥

पुनः बहुपरिकरेण-बहुपरिवारेण परिकरितः-परिवृतः ईदृशः कुमारस्य गुड्डरद्वारं-पटावासद्वारं प्राप्तः सन् यावन्नाटकं प्रेक्षते तावत् कुमारेण स पुरुषः आहूतः-स्वपार्श्वे आकारितः ॥ ४८२ ॥ स पुरुषः कृतः कुमारस्य प्रणामो-नमस्कारो येन सः तथा आसनदानेन लब्धः सन्मानो येन सः, कुमारेणासनं दापितं तेन प्राप्तसन्मान इत्यर्थः, पुनः विनयपरो-नम्रताकरणतत्परः तथा विश्वस्तः-सुस्थचित्तः एवंविधः सन् कुमारपार्श्वे उपविष्टः ॥ ४८३ ॥ सुरप्रेक्षणकेन-देवनाटकेन सदृशं तत्प्रेक्षणकं-नृत्यं क्षणं यावत् प्रलोक्य-दृष्ट्वा चिन्तयति-विचारयति, अनया लीलया एष कोऽपि राजसुतोऽस्ति ॥ ४८४ ॥ अथ नाटके पूर्णीभूते सति स पुरुषः कुमारेण पृष्टः-हे भद्र ! त्वं कोऽसि ? कुत्र पुरे तव वासो-निवासोऽस्ति, तथा किमपि आश्चर्यं दृष्टं ?, दृष्टं चेत्कथयेति भावः ॥ ४८५ ॥ एवं कुमारेण पृष्टे सति स पुमान् विनयपरः सन् कुमारं प्रति जल्पति-कथयति, हे देव!-हे महाराज ! अत्र-अस्मिन् द्वीपे वलयाकारेण-कटकाकृत्या रत्नसानुर्नाम शैलः-पर्वतोऽस्ति, कीदृशः ? गुरूणि-महान्ति शिखराणि यस्य स गुरुशिखरः ॥ ४८६ ॥

तम्मज्झकयनिवेसा अत्थि पुरी रयणसंचयानाम। तं पालइ विज्जाहरराया सिरिकणयकेउत्ति॥४८७॥
तस्सत्थि कणयमाला नाम पिया तीइ कुच्छिसंभूया। कणयपह-कणयसेहर-कणयज्झय-कणयरुइ पुत्ता
तेसिं च उवरि एगा पुत्ती नामेण मयणमंजूसा। सयलकलापारीणा अइरइरूवा मुणियतत्ता ॥४८९॥
तत्थ य पुरीइ एगो जिणदेवो नाम सावगो तस्स। पुत्तोऽहं जिणदासो कहेमि चुज्जं पुणो सुणसु ॥
सिरिकणयकेउरन्नो पियामहेणित्थ कारिअं अत्थि। गिरिसिहरसिरोरयणं भवणं सिरिरिसहनाहस्स।

तन्मध्ये-तस्य गिरेर्मध्यभागे कृतो निवेशो-रचना यस्याः सा एवंविधा रत्नसञ्चयानाम पुरी-नगरी अस्ति, तां पुरीं श्रीकनककेतुरितिनाम्ना विद्याधराणां राजा पालयति ॥ ४८७ ॥ तस्य राज्ञः कनकमालानाम प्रियाऽस्ति, तस्याः कुक्षौ सम्भूता-उत्पन्नाः कनकप्रभ १ कनकशेखर २ कनकध्वज ३ कनकरुचि ४ नामानश्चत्वारः पुत्राः सन्ति ॥ ४८८ ॥ च पुनस्तेषां चतुर्णां पुत्राणां उपरि नाम्ना मदनमञ्जूषा एका पुत्री अस्ति, सा च कीदृशी ?-सकलकलासु पारीणा-पारं प्राप्तवती पुनः अतिक्रान्तं रतेः-कामस्त्रिया रूपं-सौन्दर्यं यया सा तथा मुणितं-ज्ञातं तत्त्वं यया सा ॥ ४८९ ॥ तस्यां च पुर्यां एको जिनदेवो नाम श्रावकोऽस्ति, तस्य-जिनदेवस्य पुत्रोऽहं जिनदासोऽस्मि, चोद्यं-आश्चर्यं पुनः अहं कथयामि, त्वं शृणु ॥ ४९० ॥ श्रीकनककेतुराजस्य पितामहेन-पितुः पित्रा अत्र गिरिशिखरशिरोरत्नं श्रीऋषभनाथस्य भवनं-मन्दिरं कारितमस्ति ॥ ४९१ ॥

तं च केरिसं ?—

॥ ५७॥ संतमणोरहतुंगं उत्तमनरचरियनिम्मलविसालं। दायारसुजसधवलं रविमंडलदलिअतमपडलं ।
तम्मज्झे रिसहेसरपडिमा कणयमणिनिम्मिआ अत्थि। तिहुअणजणमणजणिआऽऽणंदा नवचंदलेहव्व
तं सो खेयरराया निच्चं अच्चेइ भत्तिसंजुत्तो । लोओऽवि सप्पमोओ नमेइ पूएइ झाएइ ॥ ४९४ ॥
सा नरवरस्स धूया विसेसओ तत्थ भत्तिसंजुत्ता। अट्ठपयारं पूयं करेइ निच्चं तिसंझासु ॥ ४९५ ॥

तच्च कीदृशमित्याह–सतां–सत्पुरुषाणां ये मनोरथास्तद्वत्तुङ्गम्–उच्चं. पुनरुत्तमनराणां यच्चरितं–आचारस्तद्वन्निर्मलं विशालं च–विस्तीर्णं तथा दातुर्यत् सुष्ठु–शोभनं यशस्तद्वद्धवलं, पुनः रविमण्डलं–सूर्यमण्डलं तद्वत् दलितं–खण्डितं तमः-पटलं–अन्धकारवृन्दं येन तत् ॥ ४९२ ॥ तन्मध्ये–तस्य मन्दिरस्य मध्ये कनकमणिभिः–स्वर्णरत्नैर्निर्मिता–रचिता ऋषभेश्वरस्य प्रतिमा–मूर्त्तिरस्ति, कीदृशी ? इत्याह–नवा–नवीना चन्द्रस्य लेखा इव त्रिभुवनजनानां–त्रैलोक्यलोकानां मनस्सु जनित–उत्पादित आनन्दो–हर्षो यया सा ईदृशी अस्ति ॥ ४९३ ॥ स खेचराणां–विद्याधराणां राजा खेचरराजो भक्त्या संयुक्तः सन् तां जिनप्रतिमां नित्यं अर्चयति–पूजयति, लोकोऽपि–नगरवासिजनोऽपि सह प्रमोदेन–हर्षेण वर्त्तते इति सप्रमोदः सन् तां नमति पूजयति ध्यायति च ॥ ४९४ ॥ सा प्रागुक्ता मदनमञ्जूषानाम्नी नरवरस्य–राज्ञः पुत्री विशेषतो भक्ति-संयुक्ता सती तत्र–जिनगृहे त्रिसन्ध्यासु नित्यं अष्टप्रकारं–अष्टविधां पूजां करोति ॥ ४९५ ॥ ॥ ५७ ॥

अन्नदिणे विहिनिउणा सा नरवरनंदिणी सपरिवारा। कयविहिवित्थरपूया भावजुया वंदए देवे ॥
ताव नरिंदोवि तहिं पत्तो पूयाविहिं पलोयंतो । हरिसेण पुलइअंगो एवं चिंतेइ हिययंमि ॥
अहो अपुव्वा पूया रइया एयाइ मज्झ धूयाए । अहो अपुव्वं च नियं विन्नाणं दंसियमिमीए ॥
एसा धन्ना कयपुन्निआ जीए जिणिंदपूयाए। एरिसओ सुहभावो दीसइ सरलो अ सुहहावो ॥

अन्यस्मिन् दिने विधौ–पूजाविधौ निपुणा–चतुरा सा नरवरस्य नन्दिनी–पुत्री परिवारेण सह वर्त्तते इति सपरिवारा तथा विधेर्विस्तरो विधिविस्तरः कृता विधिविस्तरेण पूजा यया सा कृत० पुनर्भावेन युता एवंविधा सती देवान् वन्दते–देववन्दनं करोतीत्यर्थः ॥ ४९६ ॥ तावन्नरेन्द्रोऽपि पूजाविधिं प्रलोकयन्–प्रकर्षेण विलोकयन् तत्र–जिनगृहे प्राप्तः विशिष्ट-पूजादर्शनात् हर्षेण पुलकितं–रोमोद्गमयुक्तं अङ्गं यस्य स ईदृशः सन् हृदये एवं चिन्तयति ॥ ४९७ ॥ यथा राजा चिन्तयति तथाऽऽह–अहो इति आश्चर्येण एतया मम पुत्र्याऽपूर्वा पूजा रचिता, ईदृशी पूजा पूर्वं कदापि न दृष्टेत्यर्थः, पुनरहो इति आश्चर्येऽनया मत्पुत्र्याऽपूर्वं निजं–स्वकीयं विज्ञानं–कलाकौशलं दर्शितम् ॥ ४९८ ॥ एषा मत्पुत्री धन्या च पुनः कृतपुण्याऽस्ति कृतं पुण्यं यया सा, यस्या जिनेन्द्रपूजायां ईदृशः शुभभावो वर्त्तते, च पुनर्यस्याः सरल–ऋजुः सुष्ठु–शोभनः स्वभावो दृश्यते ॥ ४९९ ॥

थिरयापभावणाकोसलत्तभत्तीसुतित्थसेवाहिं। सालंकारमिमीए नज्जइ चित्तंमि संमत्तं ॥ ५०० ॥
ता एयाए एयारिसीइ धूयाइ हवइ जइ कहवि। अणुरूवो कोइ वरो ता मज्झ मणो सुहीहोइ ॥
एवं निअधूयाए वरचिंतासल्लसल्लिओ राया। अच्छइ खणं निसन्नो सुन्नमणो झाणलीणुव्व ॥
सावि हु नरिंदधूया पूयं काऊण विहियतिपणामा। नीसरइ जाव पच्छिमपएहिं जिणगब्भगेहाओ ॥
तक्कालं तह मिलिअं तद्दारकवाडसपुंडं कहवि। केणावि जह बलिएणवि पणुल्लियं उग्घडइ नेव ॥५०४॥

स्थिरता-धर्मे स्थिरत्वं १ प्रभावना-धर्मोद्दीपकत्वं २ कुशलत्वं-जिनप्रवचने निपुणत्वं ३ भक्तिः-जिनादिषु आन्तर-प्रीतिः ४ सुतीर्थसेवा-स्थावरजङ्गमशोभनतीर्थसेवनं ५, एतैः पञ्चभिरलङ्कारैः अस्याश्चित्ते सम्यक्त्वं अलङ्कारैः सह वर्त्तते इति सालङ्कारं ज्ञायते ॥५००॥ तस्मात् एतादृश्या एतस्या मम पुत्र्या अनुरूपो-योग्यः यदि कोऽपि वरो-भर्त्ता भवति, तत्-तर्हि मम मनः सुखि-सुखभाग् भवति ॥५०१॥ एवम्-अमुना प्रकारेण निजपुत्र्या वरस्य चिन्ता एव शल्यं तेन शल्यितः-शल्ययुक्तो राजा क्षणं यावत् ध्यानलीनो-ध्यानलग्न इव शून्यं मनो यस्य स शून्यमनाः सन् निषण्ण-उपविष्टो 'अच्छति'-त्ति-अवतिष्ठते ॥ ५०२ सा नरेन्द्रस्य-राज्ञः पुत्री अपि पूजां कृत्वा विहिताः कृतास्त्रयः प्रणामा यया सा एवंविधा सती यावत् जिनस्य गर्भगृहात्-मूलमण्डपात् पश्चिमपदैर्निःसरति ॥ ५०३ ॥ तावत् तत्कालं तस्य-जिनगर्भगृहस्य द्वारे यत्कपाट-सम्पुटं तत् कथमपि-केनापि प्रकारेण तथा मिलितं यथा केनापि बलिकेन-बलवतापि प्रणोदितं-प्रेरितं सत् नैव उद्घटते ॥५०४॥

तत्तो सा निवधूया अप्पं निंदेइ गरुअसंतावा। हा हा अहं हयासा किंकयपावा असुहभावा ? ॥५०५॥
जेण मए पावाए पमायलग्गाइ मंदभग्गाए। संकरकयाइ पूयाइ दंसणं खणमवि न लद्धं ॥५०६॥
ही ही अहं अहन्ना अन्नाणवसेण कम्मदोसेणं। आसायणंपि काहं किंपि धुवं वंचिया तेण ॥५०७॥
एवं ममावराहं खमसु तुमं नाह! कुणसु सुपसायं। मह पुन्नविहीणाए दीणाए दंसणं देसु ॥५०८॥
एवं तं रुयमाणिं दट्ठूणं नंदिणिं भणइ राया। वत्थे! तुहावराहो नत्थि इमो किंतु मह दोसो ॥५०९॥

ततः-तदनन्तरं सा नृपपुत्री गुरुको-बहुः सन्तापो यस्याः सा एवंविधा सती आत्मानं निन्दति, कथमित्याह-हा हा इति खेदेऽहं हताशा जाता हता आशा-इच्छा यस्याः सा, कीदृशी अहं ?-अशुभभावात् किमपि कृतं पापं यया सा किंकृत-पापा ॥ ५०५ ॥ येन कारणेन मया पापया प्रमादे लग्नया पुनर्मन्दभाग्यया सत्या सङ्करेण-शुभाशुभरूपमिश्रभावेन कृतया पूजया दर्शनं-प्रभोर्निरीक्षणं क्षणमपि न लब्धं-न प्राप्तम् ॥ ५०६ ॥ ही हीति खेदेऽहं अधन्याऽस्मि अज्ञानवशेन कर्म्मदो-षेण कामपि आशातनां-विराधनामपि अकार्षं-कृतवती अस्मि तेन कारणेन ध्रुवं-निश्चितं वञ्चिताऽस्मि ॥ ५०७ ॥ हे नाथ ! एवं ममापराधं क्षमस्व, त्वं सुष्ठु-शोभनं प्रसादम्-अनुग्रहं कुरुष्व, पुण्यविहीनायै दीनायै मह्यं दर्शनं दत्स्व ॥५०८॥ एवं-अमुना प्रकारेण रुदंतीं-रोदनं कुर्वाणां तां पुत्रीं दृष्ट्वा राजा भणति-हे वत्स ! अयं तवापराधो नास्ति, किन्तु मम दोषोऽस्ति ॥ ५०९ ॥

जं जिणहरमज्झगओ तुहकयपूअं निरिक्खमाणोऽवि । जाओऽहं सुन्नमणो तुहवरचिंताइ खणमिक्कं ॥
ताए य मणोणेगत्तरूवआसायणाइ फलमेयं । संजायं तेण अहं निआवराहं वियक्केमि ॥५११॥
देवो अ वीयराओ नेवं रूसेइ कहवि किंतु इमं । जिणभवणाहिट्ठायगकयमपसायं मुणसु वच्छे ! ॥
तत्तो नरेहिं आणाविऊण बलिकुसुमचंदणाईयं । कप्पूरागुरुमयनाहिधूवरूवं च वरभोगं ॥५१३॥
राया धूयाइजुओ धूवकडुच्छेहिं कुणइ भोगविहिं । निम्मलचित्तो निच्चलगत्तो तत्थेव उवविट्ठो ॥५१४॥

कथमित्याह–यत् अहं जिनगृहमध्यगतः त्वया कृता या पूजा तां निरीक्षमाणोऽपि तव वरस्य चिन्तया एकं क्षणं यावत् शून्यं मनो यस्य स शून्यमना जातः ॥ ५१० ॥ तस्याश्च मनसोऽनेकस्वरूपाया आशातनाया एतत्–जिनगृहद्वारपिधानलक्षणं फलं सञ्जातं तेन कारणेन अहं निजापराधं वितर्कयामि–चिन्तयामीत्यर्थः ॥ ५११ ॥ देवश्च वीतराग एवं कथमपि न रुष्यति–न रोषं प्राप्नोति, किन्तु हे वत्से ! जिनभवनस्य अधिष्ठायको यो देवस्तेन कृतं अप्रसादं–अप्रसन्नत्वं त्वं मुण–जानीहि ॥ ५१२ ॥ ततः–तदनन्तरं बलये–पूजानिमित्तं कुसुमचन्दनादिकं नरेभ्यः–सेवकलोकेभ्यः आनाय्य च पुनः कर्पूरागुरुमृगनाभीनां–घनसारागरुकस्तूरीणां यो धूपस्तद्रूपं–तत्स्वरूपं वरं–प्रधानं भोगं–देवयोग्यं द्रव्यं–आनाय्य ॥ ५१३ ॥ राजा पुत्र्या युतः–सहितो धूपकडुच्छैर्भोगविधिं–धूपदानादिविधिं करोति, कीदृशः सन् ?–निर्म्मलं चित्तं यस्य स निर्म्मलचित्तः पुनः निश्चलं गात्रं–शरीरं यस्य स निश्चलगात्र एवंविधस्तत्रैव उपविष्टः सन् ॥५१४ ॥ युग्मम् ॥

उववासतिगं जायं, धूयासहियस्स नरवरिंदस्स । तो रंगमंडवोऽवि हु रंगं नो जणइ जणहियए ॥
सामंतमंतिपरिगहपउरजणेसुवि विसन्नचित्तेसु । उवविट्ठेसु निरंतरजलंतदिप्पंतदीवेसु ॥
केवि हु दियंति कन्नाइ दूसणं केवि नरवरिंदस्स । एवं बहुप्पयारं परप्परालावमुहरजणे ॥५१७॥
तइयाए रयणीए पच्छिमजामंमि निज्झुणिसहाए । सहसत्ति गयणवाणी संजाया एरिसी तत्थ ॥५१८॥
दोस न कोइ कुमारिअह नरवर दोस न कोइ । जिणकारणे जिणहरु जडिओ तं निसुणउ सहु कोइ ॥

तत्रैवं कुर्वतः पुत्रीसहितस्य नरवरेन्द्रस्य–राजेश्वरस्य उपवासत्रिकं जातं ततो रङ्गमण्डपोऽपि जनानां–लोकानां हृदये रङ्गं–रागं न जनयति–उत्पादयति ॥ ४१५ ॥ सामन्ताश्च मन्त्रिणश्च परिग्रहश्च–तत्परिकर एव पौरजनाश्च–नगरवासिलोकास्तेष्वपि विषण्णं चित्तं येषां ते विषण्णचित्तास्तेषु उपविष्टेषु सत्सु तथा निरन्तरं ज्वलत्सु अत एव दीप्यमानेषु दीपेषु सत्सु ॥४१६॥ केऽपि लोकाः कन्यायै दूषणं ददति, केऽपि नरवरेन्द्राय दूषणं ददति, एवम्–अमुना प्रकारेण बहुप्रकारं यथा स्यात्तथा परस्परं–अन्योऽन्यं यः आलापो–भाषणं तेन मुखरे–दुर्मुखे जने–लोके सति ॥४१७ । तृतीयस्या रजन्याः पश्चिमयामे–चतुर्थप्रहरे निर्गतो ध्वनिः–शब्दो यस्याः सा निर्ध्वनिः ईदृशी या सभा तस्यां–तत्र रङ्गमण्डपे सहसेति–अकस्मात् ईदृशी–वक्ष्यमाणस्वरूपा गगनवाणी–आकाशवाक् सञ्जाता ॥५१८॥ तामेव दोहाछन्दसा आह—अत्र कुमार्यां दोषः कोऽपि नास्ति, नरवरस्य–राज्ञोऽपि दोषः न, येन कारणेन जिनगृहं जटितं–पिहितं तत्कारणं सर्वः कोऽपि लोको निशृणोतु–आकर्णयतु॥५१९॥

तं सोऊणं बाला संजाया हरिसजणिअरोमंचा। रायाविहु साणंदो संजाओ तेण वयणेण ॥५२०॥
लोयावि सप्पमोआ जाया सव्वेवि चिंतयंति अहो। किं कारणं कहिस्सइ? तत्तो वाणी पुणो जाया ॥
जसु नरदिट्ठिइं होइस्सइ जिणहरउ मुक्कदुवारु। सोइज मयणमंजूसियह होइस्सइ भत्तारु ॥
गाढयरं तो तुट्ठा, सव्वे चिंतंति कास्सिमा वाणी। एवं च कया होही तत्तो जाया पुणो वाणी ॥५२३॥
सिरिरिसहेसर ओलगिणि, हउं चक्केसरिदेवि। मासब्भंतरि तसु नरह, आविसु निच्छइ लेवि ॥५२४॥

तदनन्तरोक्तं वाक्यं श्रुत्वा बाला–राजकन्या हर्षेण जनित–उत्पादितो रोमाञ्चो–रोमोद्गमो यस्याः सा ईदृशी सञ्जाता, राजाऽपि तेन वचनेन सानन्द–आनन्दवान् सञ्जातः ॥ ५२० ॥ लोका अपि सप्रमोदाः–सहर्षा जाताः सन्तः सर्वेऽपि चिन्तयंति–अहो इति आश्चर्ये किं कारणं कथयिष्यति?, ततः–तदनन्तरं पुनर्वाणी जाता ॥५२१॥ यस्य नरस्य दृष्ट्या जिनगृहं मुक्तं–उद्घटितं द्वारं यस्य तत् मुक्तद्वारं भविष्यति स एव नरो मदनमञ्जूषाया राजपुत्र्या भर्त्ता–वरयिता भविष्यति ॥५२२॥ ततः सर्वेऽपि लोका गाढतरं–अत्यर्थं तुष्टाः सन्तश्चिन्तन्ति–कस्येयं वाणी अस्ति, च पुनः कदा–कस्मिन्काले एवं भविष्यति, तत–एतच्चिन्तनानन्तरं पुनर्वाणी जाता ॥ ५२३ ॥ श्रीऋषभेश्वरस्य 'ओलगिणि'त्ति सेवाकर्त्री अहं चक्रेश्वरीदेवी अस्मि, मासाभ्यन्तरे–एकमासमध्ये तं पुरुषं लात्वा निश्चयेन आयास्यामि ॥ ५२४ ॥

इत्थंतरंमि जायं विहाणयं वज्जिआइं तूराइं। रायावि सपरिवारो समुट्ठिओ निअगिहं पत्तो ॥ ५२५ ॥
तत्तो कयगिहपडिमापूयाइविहीहिं पारणं विहियं। सव्वत्थवि वित्थरिया सा वत्ता लोयमज्झंमि ॥
आवंति तओ लोया सपमोया जिणहरस्स दारंमि। अणउग्घडिए तंमिवि पुणोवि गच्छंति सविसाया॥
तं जिणहरस्स दारं केणवि नो सक्कियं उघाडेउं। किंतु कओ बहुएहिंवि उग्घाडो नियकम्माणं ॥
एवं च तस्स चेईहरस्स ढंकिअदुवारदेसस्स। संजाओ किंचूणो मासो एयं तमच्छरियं ॥ ५२९ ॥
जइ पुण पुरिमुत्तम! तंसि चेव तं जिणहरस्स वरदारं। उग्घाडेसि धुवं तो मिलिया चक्केसरीवाणी ॥

अत्रान्तरे–अस्मिन्नवसरे 'विहाणय'न्ति विभातं–प्रभातं जातं, तूराणि–प्रातःकालोचितवाद्यानि वादितानि, राजापि सपरिवारः समुत्थितः सन् निजगृहं प्राप्तः ॥ ५२५ ॥ ततः कृतगृहप्रतिमापूजादिविधिभिः उपवासत्रयस्य पारणं विहितं–कृतं, सा वार्त्ता सर्वत्रापि लोकमध्ये विस्तृता–विस्तारं प्राप्ता ॥ ५२६ ॥ ततः–तदनन्तरं लोकाः सप्रमोदाः–सहर्षाः सन्तो जिनगृहस्य द्वारे आयान्ति–आगच्छन्ति, अपिः पादपूरणे, तस्मिन्द्वारेऽनुद्घटिते सति सह विषादेन वर्त्तन्ते इति सविषादाः सन्तः पुनरपि गच्छन्ति स्वस्वस्थानम् ॥ ५२७ ॥ तज्जिनगृहस्य द्वारं केनापि उद्घाटयितुं नो शक्तं–न समर्थीभूतं, किन्तु बहुभिरपि लोकैर्निजककर्मणां–स्वकीयकर्मणां उद्घाटः कृतः ॥ ५२८ ॥ एवं च–अमुना प्रकारेण 'ढङ्किय' त्ति पिहितो द्वारदेशो यस्य स तथा एवंविधस्य तस्य चैत्यगृहस्य किञ्चिदूनो मासः सञ्जातः तदेतदाश्चर्यम् ॥ ५२९ ॥ हे पुरुषोत्तम! यदि पुनः त्वमेव तत्–जिनगृहस्य वरद्वारं उद्घाटयासि? तत्–तर्हि ध्रुवं–निश्चितं चक्रेश्वर्या वाणी मिलिता ॥ ५३० ॥

तो तं कुणसु महायस! जिणभवणुग्घाडणं तुरियमेव । उग्घडिए तंमि जओ अम्हाणवि उग्घडइ पुन्नं ॥
तत्तो कुमरो तुरिअं तुरयारूढो पयंपए सिट्ठिं । आगच्छसु ताय! तुमंपि जिणहरं जेण गच्छामो ॥
तो सिट्ठी कुमरं पइ जंपइ तुब्भे अवेयणा जेण । भुंजह अणज्जियं चिय निच्चं निक्खीणकम्माणो ॥
नूणं तुम्हाणंपिव अम्हेवि न तारिसा इहच्छामो । गच्छ तुमं चिय अम्हे नियकज्जाइं करिस्सामो ॥
ततो धवलं मुत्तूणं अन्नो सव्वोऽवि सत्थपरिवारो । चलिओ कुमरेण समं पत्तो जिणभवणपासंमि ॥

तत्-तस्मात्कारणात् हे महायशः-हे महायशस्विन्! त्वं जिनभवनस्य-जिनगृहस्य उद्घाटनं त्वरितं-शीघ्रमेव कुरुष्व, यतस्तस्मिन् जिनगृहे उद्घटिते सति अस्माकमपि पुण्यं उद्घटते ॥ ५३१ ॥ ततः कुमारस्तुरगारूढः सन् त्वरितं-शीघ्रं धवलश्रेष्ठिनं प्रजल्पति-कथयति, किं जल्पतीत्याह-हे तात! त्वमपि आगच्छ येन जिनगृहं गच्छामः ॥ ५३२ ॥ ततः श्रेष्ठी कुमारं-प्रति जल्पति, यूयं अवेदनाः स्थ, न विद्यते वेदनं-विचारणं येषां ते इदृशा इत्यर्थः, कथमित्याह-येन कारणेन यूयं नित्यं निश्शेषेण क्षीणं कर्म-कार्यं येषां ते निःक्षीणकर्माणः संतोऽनर्जितमेव भुङ्ग्ध्वं-अभ्यवहरत ॥ ५३३ ॥ नूनं-निश्चितं यूयमिव-भवद्वत् वयमपि इह-अस्मिन् स्थानेऽवसरे वा तादृशा निःक्षीणकर्माणोऽनर्जितभोक्तारो न तिष्ठामः तस्मात्त्वमेव गच्छ, वयं निजकार्याणि करिष्यामः ॥ ५३४ ॥ ततो धवलं मुक्त्वा-त्यक्त्वाऽन्यः सर्वोऽपि सार्थपरिवारः कुमारेण समं-सार्द्धं चलितः सन् जिनभवनस्य-जिनगृहस्य पार्श्वे प्राप्तः ॥ ५३५ ॥



कुमरो भणेइ भो भो! पिहु पिहु गच्छेह जिणहरदुवारं । जेण फुडं जाणिज्जइ सो दारुग्घाडओ पुरिसो ॥
तो जंपइ परिवारो मा सामिय! एरिसं समाइससु । किं सूरमंतरेणं पडिबोहइ कोवि कमलवणं? ॥
ससिमंडलं विणा किं कुमुयवणुल्लासणं कुणइ कोवि? । किंच वसंतेण विणा वणराइं कोवि मंडेइ? ॥
किं सहकारेण विणा उग्घाडइ कोवि कोइलाकंठं? । ता देव! तं दुवारं तुमं विणा केण उग्घडइ? ॥
तो कुमरो तुरयाई मोत्तुं विहियउत्तरासंगो । कयनिस्सीहीसद्दो सीहदुवारंमि पविसेइ ॥ ५४० ॥

तदा कुमारो भणति-भो भो लोका! जिनगृहद्वारं पृथक् पृथक् यूयं गच्छत, येन स्फुटं-प्रकटं यथा स्यात्तथा सः द्वारोद्घाटकः पुरुषो ज्ञायते ॥ ५३६ ॥ ततः परिवारो जल्पति-हे स्वामिन्! इदृशं मा समादिश-माऽनुजानीहि; यतः सूरमन्तरेण-सूर्यं विना किं कोऽपि कमलानां वनं प्रतिबोधयति-विकसितं करोति?, नैवेत्यर्थः ॥ ५३७ ॥ तथा शशिमण्डलं-चन्द्रबिम्बं विना किं कोऽपि कुमुदवनोल्लासनं करोति? न करोतीत्यर्थः, च पुनः वसन्तेन विना किं कोऽपि वनराजिं-वनश्रेणिं मण्डयति?, नैवेत्यर्थः ॥ ५३८ ॥ तथा सहकारेण-आम्रेण विना किं कोऽपि कोकिलायाः कण्ठं उद्घाटयति? न कोऽपीत्यर्थः, 'ता' इति ततः-तस्मात् तज्जिनगृहस्य द्वारं त्वां विना केन उद्घटते? न केनापीत्यर्थः ॥ ५३९ ॥ ततः कुमारस्तुरगादिकं मुक्त्वा विहितः-कृत उत्तरासङ्गो-देहोत्तरीयवस्त्रविन्यासविशेषो येन स तथा, कृतो नैषेधिकीशब्दो येन स एवंविधः सन् सिंहद्वारे-चैत्यस्य प्रथमद्वारे प्रविशति ॥ ५४० ॥

जा जाइ मंडवंतो कुमरो उप्फुल्लनयणमुहकमलो । ता कयकिंकाररवं अररिजुयं झत्ति उग्घडियं ॥
सो तत्थ रिसहनाहं वत्थालंकारघुसिणकयपूयं । अमिलाणकुसुमदामं वंदिय ढोएइ फलमउलं ॥
इत्थंतरंमि राया धूयासहिओ समागओ तत्थ । अच्छरियकारिचरियं पिच्छइ कुमरं निहुयनिहुयं ॥
कुमरोऽवि हरिसवसओ पंचंगपणामलीढमहिवीढो । सिरसंठियकरकमलो रिसहजिणिंदं थुणइ एवं ॥

अथ कुमारः उत्फुल्लनयनमुखकमलो–विकसितनेत्रमुखकमलः सन् या (वन्मण्डपांतः-मण्डपमध्ये याति) तावत् कृतः किङ्कारवः–किङ्कारशब्दो येन तत् इदृशं अररियुगं–कपाटयुग्मं झटिति–शीघ्रं उद्घटितम् ॥ ५४१॥ सः–श्रीपालकुमारस्तत्र–जिनगृहे ऋषभनाथं देवाधिदेवं वन्दित्वाऽतुलम्-अनुपमं–सर्वोत्कृष्टमित्यर्थः फलं ढौकयति, कीदृशं ऋषभनाथं ?-वस्त्रैः–उत्तमचीरैः अलङ्कारैः–आभूषणैः घुसृणेन–कुङ्कुमेन च कृता पूजा यस्य स तं, पुनः अम्लानं–विकस्वरं कुसुमदाम–पुष्पमाला कण्ठे यस्य स तम् ॥ ५४२ ॥ अत्रान्तरे–अस्मिन्नवसरे राजा कनककेतुः पुत्रीसहितस्तत्र–जिनगृहे समागतः सन् आश्चर्यकारि चरितम्–आचारो यस्य स तं तथाविधं कुमारं निभृतनिभृतं–यथा स्यात्तथाऽतिनिश्चलदृष्ट्येत्यर्थः प्रेक्षते–पश्यति ॥ ५४३ ॥ कुमारोऽपि हर्षवशात् पञ्चाङ्गप्रणामेन लीढं–आश्लिष्टं महीपीठं येन स तथा, शिरसि–मस्तके संस्थिते करकमले यस्य एवंविधः-सन् एवं–वक्ष्यमाणप्रकारेण ऋषभजिनेन्द्रं स्तौति ॥ ५४४ ॥

सिरिसिद्धचक्कनवपयमहल्लपढमिल्लपयमय जिणिंद । असुरिंदसुरिंदच्चियपयपंकय नाह ! तुज्झ नमो॥
सिरिरिसहेसरसामिय ! कामियफलदाणकप्पतरुकप्प !। कंदप्पदप्पगंजण ! भवभंजण देव ! तुज्झ नमो॥
सिरिनाभिनामकुलगरकुलकमलुल्लासपरमहंससम । असमतमतमतमोभरहरणिक्कपईव ! तुज्झ नमो॥

श्रीसिद्धचक्रे यानि नव पदानि तेषु महत् यत्प्रथमं पदं तत्स्वरूपमस्येति श्रीसिद्धचक्रनवपदमहाप्रथमपदमयस्तत्सम्बुद्धौ हे श्री० ! हे जिनेन्द्र ! पुनः-असुरेन्द्राः–चमरबल्याद्याः सुरेन्द्राः–सौधर्मेशानादयः उपलक्षणान्नागेन्द्रादयोऽपि ग्राह्यास्तैरार्चिते–पूजिते पदपङ्कजे–चरणकमले यस्य तत्सं० हेऽसुरेन्द्रसुरेन्द्रार्चितपदपङ्कज ! हे नाथ ! तुभ्यं नमः ॥ ५४५ ॥ हे श्रीऋषभेश्वरस्वामिन् ! तथा कामितफलदाने–वाञ्छितफलप्रदाने कल्पतरुकल्पः–कल्पवृक्षतुल्यः तत्सम्बोधने हे कामितफलदानकल्पतरुकल्प ! पुनः कन्दर्पस्य–कामस्य यो दर्पः–अभिमानस्तस्य गञ्जनो–मर्दकस्तत्सं० हे कंदर्प्पदर्प्पगंजन ! पुनः हे भवभञ्जन ! हे देव ! तुभ्यं नमः ॥ ५४६ ॥ श्रीनाभिनामा यः कुलकरस्तस्य यत्कुलं तदेव कमलं तस्योल्लासे–विकासने परमः–प्रकृष्टो हंसः–सूर्यस्तत्समः–तत्तुल्यस्तत्सं० हे श्रीनाभि० पुनः न विद्यते समं–तुल्यं यस्य तत् असमं उत्कृष्टमित्यर्थः अतिशयेन असमं असमतमं इदृशं यत्तमः–अज्ञानं तदेव तमोभरः–अन्धकारप्राग्भारस्तस्य हरणे एकः–अद्वितीयः प्रदीपः असम० प्रदीपस्तत्सं० हे असम० तुभ्यं नमः ॥ ५४७ ॥

सिरिमरुदेवासामिणिउदरदरीदरिअकेसरिकिसोर !। घोरभुयदंडखंडियपयंडमोहस्स तुज्झ नमो ॥
इक्खागुवंसभूसण गयदूसण दूरियमयगलमइंद !। चंदसमवयण वियसियनीलुप्पलनयण तुज्झ नमो ॥
कल्लाणकारणुत्तमतत्तकणयकलससरिससंठाण !। कंठट्ठियकलकुंतलनीलुप्पलकलिय तुज्झ नमो ॥

श्रीमरुदेव्याः स्वामिन्या उदरमेव दरी-गुहा तस्यां अदरितो-निर्भीकः केशरिकिशोर इव-सिंहबाल इव श्रीमरु० तत्सम्बोधने हे श्रीमरुदेवा० ! अत्र ' दरिय ' त्ति दृप्तो हृष्ट इत्यर्थः घोरौ-दारुणौ यौ भुजदण्डौ ताभ्यां खण्डितः प्रचण्डो मोहो येन स तस्मै तुभ्यं नमः ॥ ५४८ ॥ हे इक्ष्वाकुवंशभूषण ! पुनः गतानि दूषणानि यस्मात् स गतदूषणस्तत्सं० हे गतदूषण ! पुनः दुरितानि-पापान्येव मदकला-मदोत्कटगजास्तेषां वारणे मृगेन्द्रः-सिंह इव दूरितमदकलमृगेन्द्रस्तत्सं० हे दुरित० पुनश्चन्द्रेण समं-तुल्यं वदनं-मुखं यस्य स चं० तत्सं० हे चन्द्रसमवदन ! पुनः विकसिते ये नीलोत्पले-नीलकमले तद्वन्नयने-नेत्रे यस्य तत्सं० हे विकसित० नयन तुभ्यं नमः ॥ ५४९ ॥ कल्याणस्य कारणं यत् उत्तमं तप्तं कनकं-सुवर्णं तस्य यः कलशस्तेन सदृशं संस्थानं-आकारो यस्य तत्सं० हे कल्याणकारण० संस्थान ! पुनः कण्ठे स्थिता ये कला-मनोहराः कुन्तलाः-पश्चमपुष्टिसम्बन्धिकेशास्त एव नीलोत्पलानि तैः कलितो-युक्तस्तत्सं० हे कण्ठस्थित०कलित तुभ्यं नमः, कलशस्य कण्ठे नीलोत्पलानि ज्ञेयानि ॥ ५५० ॥ ॥ ६३ ॥

आईसर जोईसरलयगयमणलक्खलक्खियसरूव !। भवकूवपडिअजंतुत्तारण जिणनाह! तुज्झ नमो ॥
सिरिसिद्धसेलमंडण दुहखंडण खयररायनयपाय। सयलमहसिद्धिदायग! जिणनायग होउ तुज्झ नमो॥
तुज्झ नमो तुज्झ नमो तुज्झ नमो देव! तुज्झ चेव नमो। पणयसुररयणसेहररुइरंजियपाय ! तुज्झ नमो॥

इति स्तवनम्

रायावि सुयासहिओ निसुणंतो कुमरविहियसंथवणं। आणंदपुलइअंगो जाओ अमिएण सित्तुव्व ॥

हे आदीश्वर ! पुनर्योगीश्वराणां लयं गतानि-लीनतां प्राप्तानि यानि मनोलक्षाणि तैर्लक्षितं स्वरूपं यस्य सः तत्सम्बुद्धौ हे योगीश्वरलयगत० स्वरूप ! पुनर्भवकूपे पतितान् जन्तून् उत्-ऊर्द्धं तारयतीति भवजन्तूत्तारणस्तत्सं० हे भव० ! जिननाथ तुभ्यं नमः ॥ ५५१ ॥ हे श्रीसिद्धशैलस्य-शत्रुञ्जयगिरेर्मण्डन हे दुःखखण्डन पुनः खचरराजेन-विद्याधरभूपेन नतौ पदौ यस्य स खचर० पादस्तत्सं० हे खचर० ! पुनर्महा सकलसिद्धिदायक ! हे जिननायक ! तुभ्यं नमोऽस्तु ॥ ५५२ ॥ तुभ्यं नमः तुभ्यं नमः तुभ्यं नमः हे देव ! तुभ्यमेव नमः पुनः प्रणताः-प्रकर्षेण नता ये सुरा-देवास्तेषां यानि रत्नशेखराणि तेषां रुचिभिः-दीप्तिभी रञ्जितौ पादौ यस्य स प्रणत० पादस्तत्सं० हे प्रणत० तुभ्यं नमोऽस्तु ॥५५३॥ सुतासहितो राजापि कुमारेण विहितं-कृतं संस्तवनं निशृण्वन् आनन्देन पुलकितं-रोमोद्गमयुक्तं अङ्गं यस्य स एवंविधः सञ्जातः, क इव ?-अमृतेन सिक्त इव ॥ ५५४ ॥

कुमरोवि जिणं नमिउं सीसंमि निवेसिऊण जिणसेसं । बहिमंडवंमि करवंदणेण वंदेइ नरनाहं ॥
नरनाहो अभिणंदिअ तं पभणइ वच्छ! जह तए भवणं । उग्घाडियं तहा नियचरियंपि हु अम्ह पयडेसु॥
निअ नामंपि हु जंपंति उत्तमा ता कहेमि कह चरिअं । इअ चिंतइ जा कुमरो ता पत्तो चारणमुणिंदो ॥
सो वंदिऊण देवे उवविट्ठो जाव ताव तं नमिउं । उवविट्ठेसु निवाइसु चारणसमणो कहइ धम्मं ॥५५८॥
भो भो महाणुभावा! सम्मं धम्मं करेह जिणकहियं । जइ वंछह कल्लाणं इहलोए तहय परलोए ॥

कुमारोऽपि जिनं नत्वा– प्रणम्य शीर्षे–निजमस्तके जिनशेषां–जिननिर्माल्यं पुष्पादिकं निवेश्य–संस्थाप्य बहिर्मण्डपे कराभ्यां वन्दनेन नरनाथं–राजानं वन्दते–प्रणमति ॥ ५५५ ॥ नरनाथो–राजा तं श्रीपालं अभिनन्द्य–आशिषा सन्तोष्य प्रभणति–हे वत्स ! यथा त्वया भवनं–जिनमन्दिरं उद्घाटितं तथा निजचरितमपि अस्माकं पुरस्तात् प्रकटय–प्रकटीकुरु ॥ ५५६ ॥ हु इति निश्चितं उत्तमाः पुरुषा निजनामापि न जल्पन्ति–न कथयन्ति, ततः–तर्हि स्वस्य चरितं कथं कथयामि ?, इत्येवं यावत्कुमारश्चिन्तयति तावत्तत्र चारणमुनीन्द्रः प्राप्त–आकाशमार्गेणाजगाम ॥ ५५७ ॥ सः–चारणलब्धिमान् साधुर्देवान् वन्दित्वा यावत् उपविष्टस्तावत् तं साधुं नत्वा नृपादिषु उपविष्टेषु सत्सु चारणश्रमणो नृपादीनां पुरस्तात् धर्मं कथयति ॥ ५५८ ॥ महान् अनुभावः–प्रभावो येषां ते म० भो भो महानुभावा ! यूयं जिनैः कथितं धर्मं सम्यक् कुरुत, यदि इह लोके–अस्मिन् भवे तथा च परलोके–परभवे कल्याणं वाञ्छत ॥ ५५९ ॥

॥ ६४ ॥

धम्मो जिणेहिं कहिओ तत्ततिगाराहणामओ रम्मो । तत्ततिगं पुण भणिअं देवो अ गुरू अ धम्मो अ ॥
इक्किक्कस्स उ भेआ नेया कमसो दु तिन्नि चत्तारि । तत्थऽरिहंता सिद्धा दो भेआ देवतत्तस्स ॥
आयरिअउवज्झाया सुसाहुणो चेव तिन्नि गुरुभेआ। दंसणनाणचरित्तं तवो अ धम्मस्स चउभेआ ॥
एएसु नवपएसुं अवयरिअं सासणस्स सव्वस्सं । ता एयाइं पयाइं आराहह परमभत्तीए ॥ ५६३ ॥

जिनैस्तत्त्वत्रिकस्य आराधना स्वरूपमस्येति तत्त्वत्रिकाराधनामयो रम्यो–मनोज्ञो धर्मः कथितः, तत्त्वत्रिकं पुनर्भणितं देवश्च गुरुश्च धर्मश्च–देवतत्त्वं १ गुरुतत्त्वं २ धर्मतत्त्वं ३ चेत्यर्थः ॥ ५६० ॥ तु पुनः एकैकस्य तत्त्वस्य क्रमेण द्वौ त्रयश्चत्वारश्च भेदा ज्ञेयाः–देवतत्त्वस्य द्वौ भेदौ गुरुतत्त्वस्य त्रयो भेदाः धर्म्मतत्त्वस्य चत्वार इत्यर्थः, तत्र देवतत्त्वस्य द्वौ भेदौ अर्हन्तः १ सिद्धाश्च २ ॥ ५६१ ॥ आचार्या १ उपाध्यायाः २ सुसाधव३श्चैव एते त्रयो गुरुतत्त्वस्य भेदाः, तथा दर्शनं–सम्यक्त्वं १ ज्ञानं–तत्त्वावबोधः २ चारित्रं–विरतिरूपं ३ तपश्च–अनशनादि ४ एते धर्मतत्त्वस्य चत्वारो भेदाः ॥ ५६२ ॥ एतेषु नवपदेषु जिनशासनस्य सर्वस्वं–सर्वसारं अवतीर्णं अस्तीति शेषः, ततः–तस्मात् भो भो भव्या ! यूयं एतानि पदानि परमभक्त्या आराधयत–सेवध्वम् ॥ ५६३ ॥

जहा-जिअंतरंगारिजणे सुनाणे सुपाडिहेराइसयप्पहाणे। संदेहसंदोहरयं हरंते झाएह निच्चंपि जिणेऽरिहंते
दुट्ठट्ठकम्मावरणप्पमुक्के, अणंतनाणाइसिरीचउक्के।समग्गलोगग्गपयप्पसिद्धे, झाएह निच्चंपि मणंमि सिद्धे
न तं सुहं देइ पिया न माया, जं दिंति जीवाणिह सूरिपाया। तम्हा हु ते चेव सया महेह, जं मुक्ख-
सुक्खाइं लहुं लहेह ॥ ५६६ ॥

यथा-जिता अन्तरङ्गारिजनाः-कामक्रोधाद्यान्तरवैरिलोका यैस्ते जिता०स्तान्, पुनः सुष्ठु ज्ञानं येषां ते तान्, तथा सुप्रातिहार्यैः-अशोकादिभिः शेषैरतिशयैश्च प्रधानाः-प्रकृष्टास्तान्, प्रधानशब्दस्त्रिलिङ्गोऽप्यस्ति, पुनः सन्देहानां-संशयानां यः सन्दोहः-समूहस्तदेव रजस्तत् हरन्तीति हरन्तस्तान् हरन्तः एवंविधान् जिनान्-अर्हतो नित्यमपि यूयं ध्यायत ॥ ५६४ ॥ दुष्टाष्टकर्माण्येव आवरणानि तेभ्यः प्रकर्षेण मुक्तान्, पुनः अनन्तं ज्ञानादिलक्ष्मीचतुष्कं येषां ते तान्, अनन्तज्ञान-दर्शनसुखाकरणवीर्ययुतानित्यर्थः, तथा समग्रः-सम्पूर्णो यो लोकस्तस्य यदग्रपदं-उपरितनस्थानं तत्तु प्रसिद्धान्-प्रकर्षेण सिद्धत्वप्राप्तान् एवंविधान् सिद्धान् नित्यमपि यूयं मनसि ध्यायत ॥ ५६५ ॥ इह-संसारे जीवेभ्यः तत्सुखं पिता न ददाति माता न ददाति यत् सुखं सूरिपादा-आचार्यपूज्या ददति-प्रयच्छन्ति, तस्मात् तानेव आचार्यान् यूयं सदा महत-पूजयत, यत्-येन मोक्षसौख्यानि लघु-शीघ्रं लभध्वं-प्राप्नुत ॥ ५६६ ॥

सुत्तत्थसंवेगमयस्सुएणं, सन्नीरखीरामयविस्सुएणं।पीणंति जे ते उवझायराए, झाएह निच्चंपि कयप्पसाए
खंते अ दंते अ सुगुत्तिगुत्ते, मुत्ते पसंते गुणजोगजुत्ते। गयप्पमाए हयमोहमाए, झाएह निच्चं
मुणिरायपाए ॥ ५६८ ॥
जं दव्वछक्काइसुसद्दहाणं, तं दंसणं सव्वगुणप्पहाणं। कुग्गाहवाही उ वयंति जेण, जहा विसुद्धेण
रसायणेण ॥ ५६९ ॥

ये उपाध्यायाः सूत्रार्थसंवेगमयश्रुतेन भव्यान् प्रीणन्ति-तृप्तीकुर्वन्ति तान् उपाध्यायराजान् नित्यमपि यूयं ध्यायत, सूत्रं च अर्थश्च संवेगमयश्रुतं च एषां समाहारः सूत्रार्थसंवेगमयश्रुतं तेन, कीदृशेन-सन्नीर० सन्नीरं-सम्यग्जलं क्षीरं-पयः अमृतं-सुधा तद्वद्विश्रुतेन-प्रसिद्धेन, अयं भावः-सूत्रं स्वादुनीरोपमं अर्थश्च क्षीरोपमः संवेगमयश्रुतं तु अमृतोपममिति, कीदृशान् उपाध्यायराजान्? कृतः प्रसादः-अनुग्रहो यैस्ते तान् ॥ ५६७ ॥ क्षान्तान्-क्षमायुक्तान् दान्तान्-दमयुक्तान् चकारौ समुच्चये सुगुप्तिभिः-मनोगुप्त्यादिभिर्गुप्तान्-गुप्तिमतः मुक्तान्-निर्लोभान् प्रशान्तान्-शान्तरसोपेतान् पुनः गुणानां योगः-सम्बन्धस्तेन युक्तान्, तथा गताः प्रमादा-मद्यादयो येभ्यस्ते तान्, पुनर्मोहश्च माया च मोहमाये हते मोहमाये यैस्ते तान् एवंस्वरूपान् मुनिराजपादान्-मुनिराजपूज्यान् यूयं नित्यं ध्यायत ॥ ५६८ ॥ यत् द्रव्यषट्कादेः सुष्ठु-शोभनं श्रद्धानं तद्दर्शनं नाम धर्मं सर्वगुणेषु प्रधानं वर्त्तते येन सम्यग्दर्शनेन कुग्राहा-हतवादा एव व्याधयो-रोगा व्रजंति-गच्छन्ति यथा विशुद्धेन-निर्मलेन रसायनेन, अयं भावः-जराव्याधिजिदौषधं रसायनमुच्यते तेन यथा रोगाः सर्वेऽपि गच्छन्ति तथा दर्शनेन कुग्राहा व्रजन्ति॥ ५६९॥

नाणं पहाणं नयचक्कसिद्धं, तत्तावबोहिक्कमयं पसिद्धं । धरेह चित्तावसहे फुरंतं, माणिक्कदीवुव्व तमो हरंतं
सुसंवरं मोहनिरोहसारं, पंचप्पयारं विगयाइयारं । मुलोत्तराणेगगुणं पवित्तं, पालेह निच्चंपिहु सच्चरित्तं॥
बज्झं तहाभिंतरभेअमेअं, कयाइदुब्भेअकुकम्मभेअं । दुक्खक्खयत्थं कयपावनासं, तवं तवेहाग-
मिअं निरासं ॥ ५७२ ॥

नयानां-नैगमादीनां चक्रेण-समूहेन सिद्धं-निष्पन्नं पुनस्तत्त्वावबोधः-तत्त्वज्ञानं एकं स्वरूपमस्येति तत्त्वावबोधैकमयं प्रसिद्धं-सर्वत्र विदितं प्रधानं-मुख्यं एवम्भूतं ज्ञानं चित्तावसथे-मनोमन्दिरे धरत, कीदृशं ज्ञानं ?-स्फुरत्-दीप्यमानं अत एव माणिक्यदीपमिव तमः-अज्ञानान्धकारं हरत् ॥ ५७० ॥ भो भव्याः ! सुष्ठु संवरो यस्मिंस्तत् सुसंवरं तथा मोहनिरोध एव सारः-श्रेष्ठो यत्र तत् मो० पुनः पञ्च प्रकाराः-सामायिकादयो भेदा यस्य तत् पं० तथा विगता अतीचारा यस्मात्तत् तथा मूलोत्तररूपा अनेके गुणा यस्मिंस्तत्, मूलगुणाः-प्राणातिपातविरमणादय उत्तरगुणाः-पिण्डविशुद्ध्यादयः, पुनः पवित्रं-पावनं एवम्भूतं सच्चारित्रं नित्यमपि यूयं पालयत ॥ ५७१ ॥ भो भव्या ! यूयं एतद्बाह्यं तथाऽभ्यन्तरभेदं तपस्तपत, कीदृशमेतत् ?-अतिशयेन दुर्भेदानि यानि कुकर्म्माणि तेषां भेदो-विदारणं कृतो येन तत् कृत०, अत एव कृतः पापनाशो येन तत्कृतपापनाशं, पुनः कीदृशं ?-आगमे भवं आगमिकं, तथा निर्गता आशा-वाञ्छा यस्मात्तन्निराशं, ईदृशं तपस्तपत, किमर्थमित्याह-दुःखक्षयार्थम् ॥ ५७२ ॥

एयाइं जे केवि नवप्पयाइं, आराहयंतिट्ठफलप्पयाइं । लहंति ते सुक्खपरंपराणं, सिरिं सिरीपालनरेसरुव्व ॥ ५७३ ॥
राया पुच्छइ भयवं ! को सिरिपालुत्ति ? तो मुणिंदोवि । करसन्नाए दंसइ एसो तुह पासमासीणो ॥
तं नाऊणं राया, सपमोओ विन्नवेइ मुणिरायं । भयवं ! करेह पयडं एयस्स सरूवमम्हाणं ॥ ५७५ ॥
तत्तो चारणसमणेण तेण आमूलचूलमेयस्स । कहियं ताव चरित्तं जिणभवणुग्घाडणं जाव ॥ ५७६॥
इत्तोवि परं एसो परिणिंतोऽणेगरायकन्नाओ । पिअरज्जे उवविट्ठो होही रायाहिराओत्ति ॥ ५७७ ॥

ये केऽपि जीवा एतानि इष्टफलप्रदानि-वाञ्छितफलदायकानि नव पदानि आराधयन्ति ते श्रीपालनरेश्वर इव सुखपरम्पराणां श्रियं-लक्ष्मीं लभन्ते-प्राप्नुवन्ति ॥ ५७३ ॥ तदा राजा पृच्छति, हे भगवन् ! कः श्रीपाल इति, ततो मुनीन्द्रोऽपि करस्य-हस्तस्य संज्ञया दर्शयति, एष तव पार्श्वं आसीनः त्वत्समीपे उपविष्ट इत्यर्थः ॥ ५७४ ॥ राजा तं श्रीपालं ज्ञात्वा सप्रमोदः-सहर्षः सन् मुनिराजं विज्ञपयति, हे भगवन् ! एतस्य-श्रीपालस्य स्वरूपं अस्माकं पुरस्तात् प्रकटं कुरुत ॥ ५७५ ॥ ततस्तेन-चारणश्रमणेन एतस्य-श्रीपालस्य आमूलचूलं तावच्चरित्रं कथितं यावज्जिनभवनोद्घाटनं कृतमिति शेषः ॥ ५७६ ॥ इतः परमपि एष श्रीपालोऽनेकराजकन्याः परिणयन् पितृराज्ये उपविष्टः सन् राजाधिराजो भविष्यतीति, राजसु अधिको राजा-राजाधिराजः ॥ ५७७ ॥

तत्थ सिरिसिद्धचक्कं विहिणा आराहिऊण भत्तीए। पाविस्सइ सग्गसुहं कमेण अपवग्गसुक्खं च ॥
तत्तो एस महप्पा महप्पभावो महायसो धन्नो। कयपुन्नो महभागो संजाओ नवपयपसाया ॥
जो कोइ महापावो एयस्सुवरिंपि किंपि पडिकूलं। करिही सुच्चिअ लहिही तक्कालं चेव तस्स फलं॥
एयस्स सिद्धसिरिसिद्धचक्कनवपयपसायपत्तस्स। धुवमावयावि होही गुरुसंपयकारणं चेव ॥ ५८१ ॥
एवं चेव कहंतो संपत्तो मुणिवरो गयणमग्गे। लोओ अ सप्पमोओ जाओ नरनाहपामुक्खो॥ ५८२॥

तत्र-महाराजावस्थायां श्रीसिद्धचक्रं विधिना भक्त्या आराध्य स्वर्गसुखं प्राप्स्यति, क्रमेण अपवर्गसुखं-मुक्तिसुखं च प्राप्स्यति ॥ ५७८ ॥ ततः-तस्मात्कारणात् एष महात्मा, पुनः महान् प्रभावो यस्य स महाप्रभावः, तथा महद् यशो यस्य स महायशाः, धन्यः, पुनः कृतं पुण्यं येन स कृतपुण्यस्तथा महान् भागो-भाग्यं यस्य स महाभागो नवपदानां प्रसादात्सञ्जातः ॥ ५७९ ॥ यः कोऽपि महापापः पुमान् एतस्योपरि अपि किमपि प्रतिकूलं-विरुद्धं करिष्यति तस्य फलं स एव पुमान् तत्कालमेव लप्स्यते-प्राप्स्यति ॥ ५८० ॥ सिद्धं-निष्पन्नं यत् श्रीसिद्धचक्रं तत्र यानि नव पदानि तेषां प्रसादपात्रस्य एतस्य श्रीपालस्य ध्रुवं-निश्चितं आपदपि-विपदपि गुरुसम्पत्कारणं एव भविष्यति ॥ ५८१ ॥ एवं कथयन्नेव मुनिवरो गगनमार्गे-आकाशमार्गे सम्प्राप्तः नरनाथप्रमुखो-राजादिको लोकश्च सह प्रमोदेन-हर्षेण वर्त्तते इति सप्रमोदो-हर्षवान् जातः ॥ ५८२ ॥

तक्कालं चिअ कुमरस्स तस्स दाऊण मयणमंजूसं। काऊण य सामग्गिं सयलंपि विवाहपव्वस्स ॥
तस्स भवणस्स पुरओ मिलिए सयलंमि नयरलोअंमि। महया महेण रन्ना पाणिग्गहणंपि कारविअं ॥
दिन्नाइं बहुविहाइं मणिकंचणरयणभूसणाईणि। दिन्ना य गयहयावि अ दिन्नो य सुसारपरिवारो ॥
दिन्नो अ वरावासो तत्थ ठिओ दोहिं वरकलत्तेहिं। सहिओ कुमारराओ जाओ सव्वत्थ विक्खाओ॥
निच्चंपि तंमि चेइयहरंमि कुमरो करेइ साणंदो। पूआपभावणाहिं सहलं निअरिद्धिवित्थारं ॥५८७॥

ततो राज्ञा तत्कालमेव तस्मै कुमाराय मदनमञ्जूषां स्वकन्यां दत्त्वा च पुनः विवाहपर्वणो-विवाहोत्सवस्य सकलां-समस्तामपि सामग्रीं कृत्वा ॥ ५८३ ॥ तस्य जिनभवनस्य पुरतः-अग्रतः सकलेऽपि नगरलोके मिलिते सति महता महेन-उत्सवेन पाणिग्रहणमपि कारितम् ॥ ५८४ ॥ बहुविधानि-बहुप्रकाराणि मणिकाञ्चनरत्नानां भूषणादीनि दत्तानि च पुनः हया-अश्वा गजा-हस्तिनोऽपि च दत्ताः च पुनः सुतरां सारः परिवारो दत्तः अतिशयेन ॥५८५॥ वरः-प्रधान आवासश्च दत्तः, तत्रावासे स्थितो द्वाभ्यां कलत्राभ्यां सहितो-युक्तः कुमारराजः सर्वत्र विख्यातः-प्रसिद्धो जातः ॥ ५८६ ॥ तस्मिन् चैत्यगृहे नित्यमपि-सर्वदापि कुमारः सानन्दः सन् पूजाप्रभावनाभिर्निजऋद्धिविस्तारं सफलं-फलयुक्तं करोति ॥ ५८७ ॥

अह चित्तमासअट्ठाहिआउ विहिआउ तत्थ विहिपुव्वं। सिरिसिद्धचक्कपूआविहीवि आराहिओ तेण ॥
अन्नदिणे तस्स जिणालयस्स सुबलाणयंमि आसीणो। राया कुमारसहिओ कारावइ जाव जिणमहिमं ॥
ता दंडपासिएणं विन्नत्तो देव ! सत्थवणिएणं । एगेण दाणभंगं काउं आणावि तुह भग्गा ॥
सो अत्थि मए बद्धो एसो को तस्स सासणाएसो ? । राया भणेइ आणाभंगे पाणा हरिज्जंति ॥
कुमरो भणेइ मा मा मारणादेसमिह ठिओ देसु। सावज्जवयणकहणेवि जिणहरे जेण गुरुदोसो ॥

अथ—अनन्तरं तेन श्रीपालकुमारेण तत्र नगर्यां विधिपूर्वं चैत्रमासस्य अष्टाह्निका विहिता—कृता, श्रीसिद्धचक्रस्य पूजाविधिरपि आराधितः—सेवितः, अत्र पूर्वार्धे एकस्तुशब्दो विशेषे द्वितीयः पादपूरणे ॥ ५८८ ॥ अन्यस्मिन् दिने तस्य जिनालयस्य—जिनगृहस्य सुबलानके—जनोपवेशनस्थाने आसीन—उपविष्टो राजा कुमारसहितो यावत् जिनस्य—भगवतो महिमानं कारयति ॥ ५८९ ॥ तावत् दण्डपाशिकेन—दण्डनियोगिपुरुषेण राजा विज्ञप्तः—हे देव—हे राजन् ! एकेन सार्थवणिजा दानभङ्गं कृत्वा तवाज्ञाऽपि भग्ना ॥ ५९० ॥ स—एष सार्थवणिक् मया बद्धोऽस्ति तस्य कः शासनादेशः—का शिक्षणाज्ञा? को दण्ड इत्यर्थः, तदा राजा भणति—आज्ञाभङ्गे प्राणा ह्रियन्ते प्राणापहारः क्रियते, इत्यर्थः ॥ ५९१ ॥ एतन्नृपवचः श्रुत्वा कुमारो भणति, हे महाराज ! इह—जिनालयभूमौ स्थितः सन् मारणादेशं मा मा—मा दत्स्व—मा देहीत्यर्थः, येन कारणेन जिनगृहे सावद्यस्य—सदोषस्य वचनस्य कथनेऽपि गुरुः—महान् दोषोऽस्ति ॥ ५९२ ॥



तो राया छोडाविअ आणावइ जाव निअयपासंमि। तं दट्ठूणं कुमरो उवलक्खइ धवलसत्थवइं ॥
चिंतइ मणे कुमारो अहह कहं एरिसंपि संजायं ? । अहवा लोहवसेणं जीवाणं किं न संभवइ? ॥
तं निअजणयसमाणं कहिउं मोआविओ नरिंदाओ। उवयारपरो कुमरो विसज्जए निअयठाणे अ ॥
अह अन्नदिणे कुमरो विन्नत्तो वाणिएण एगेण । सामिअ ! पूरिअपोआ अम्हे सव्वेवि संवहिआ ॥
तो जह चिअ कुसलेणं अम्हे तुम्हेहिं आणिया इहयं। तह निअदेसंमि पुणो सामिअ ! तुरिअं पराणेह ॥

ततो राजा तं छोटयित्वा—बन्धनात् मोचयित्वा यावन्निजपार्श्वे आनाययति तावत् कुमारः—श्रीपालस्तं दृष्ट्वा धवलसार्थपतिं उपलक्षते—धवलसार्थपतिरेवायमिति जानातीत्यर्थः ॥ ५९३ ॥ कुमारो मनसि चिन्तयति, अहह—इति खेदे ईदृशमपि अकार्यं कथं सञ्जातं ? अथवा जीवानां लोभवशेन किं न सम्भवति, सर्वमप्यकार्यं सम्भवेदित्यर्थः ॥ ५९४ ॥ अथोपकारपर—उपकारकरणतत्परः कुमारस्तं धवलं निजजनकसमानं कथयित्वा—मम पितृतुल्योऽयमिति भणित्वा नरेन्द्रात्—राज्ञो मोचयति, च पुनः निजकस्थाने विसर्जयति—गमनाज्ञां दापयति ॥ ५९५ ॥ अथ अन्यस्मिन् दिने एकेन वणिजा कुमारो विज्ञप्तः—हे स्वामिन् ! पूरिताः—क्रयाणकैर्भृताः पोता—वहनानि यैस्ते एवम्भूता वयं सर्वेऽपि संव्यूढा—गमनाय प्रगुणीभूताः स्म ॥ ५९६ ॥ ततः—तस्मात्कारणात् यथैव युष्माभिर्वयं कुशलेन इह आनीताः तथा—तेनैव प्रकारेण हे स्वामिन् ! निजदेशे पुनस्त्वरितं—शीघ्रं प्रापय—प्राप्तान् कुरु, अत्र पूर्वार्द्धे नियकुसलेणेतिपाठोऽपि तत्र नित्यकुशलेनेत्यर्थः ॥ ५९७ ॥

तो कुमरो नरनाहं आपुच्छइ निअयदेसगमणत्थं । कहकहवि सो विसज्जइ काऊणं गुरुअसम्माणं ॥

॥ ६६ ॥ दाउं सुयाइसिक्खं कुमरस्स भलाविऊण धूयं च । पोयंमि समारोविअ कुमरं वलिओ नरवरिंदो ॥

कुमरो बहुमाणेणं धवलंपिहु सारसारपरिवारं । नियपोयंमि निवेसइ सेसजणे सेसपोएसु ॥ ६०० ॥

पत्थाणमंगलंमी पहयाओ दुंदुहीउ भेरीओ । सज्जीकया य पोया चल्लंति महल्लवेगेणं ॥ ६०१ ॥

पोयारूढो कुमरो जलहिंमिवि अणुहवेइ लीलाओ । जह पालयाहिरूढो देविंदो गयणमग्गेवि ॥

ततः—तदनन्तरं कुमारो नरनाथं—राजानं प्रति निजकदेशगमनार्थं आपृच्छति, स राजा गुरुकं—बहुलं सन्मानं कृत्वा कथं-कथमपि महता कष्टेन विसृजति—गमनाज्ञां ददाति ॥ ५९८ ॥ नरवरेन्द्रो—राजेन्द्रः सुतायै—पुत्र्यै शिक्षां दत्त्वा च पुनः मम पुत्री सम्यक्तया रक्षणीयेत्याद्युक्तिपूर्वं पुत्रीं कुमाराय समर्प्य कुमारं पोते—यानपात्रे समारोप्य वलितः स्वयं स्वस्थानं प्रति ॥ ५९९ ॥ कुमारः सारसारपरिवारं धवलमपि बहुमानेन—आदरेण निजपोते निवेशयति—उपवेशयति, शेषजनान् शेषपोतेषु निवेशयति ॥ ६०० ॥ प्रस्थानमङ्गले—प्रस्थानमङ्गलसमये इत्यर्थः, दुन्दुभयो—दुन्दुभिनाम्न्यो भेर्यः प्रहताः—ताडिता—वादिता इतियावत् च पुनः सज्जीकृताः पोता महावेगेन चलन्ति ॥ ६०१ ॥ अथ पोतारूढः—प्रवहणोपविष्टः कुमारो जलधौ—समुद्रेऽपि लीलाः—क्रीडा अनुभवति, कथमित्याह—यथा पालकाधिरूढः—पालकविमानावस्थितो देवेन्द्रः—शक्रो गगनमार्गे—आकाशमार्गेऽपि लीला अनुभवति तथेत्यर्थः ॥ ६०२ ॥ ॥ ६६ ॥

दट्ठूण कुमरलीलं रमणीजुयलं च रिद्धिवित्थारं । धवलो विचलिअचित्तो एवं चिंतेउमाढत्तो ॥

अहह अहो जणभित्तो संपत्तो केरिसिं सिरिं एसो । अन्नं च रमणिजुयलं एरिसयं जस्स सो धन्नो ॥

ता जइ एयस्स सिरी रमणीजुयलं च होइ मह कहवि । ताऽहं होमि कयत्थो अकयत्थो अन्नहा जम्मो ॥

एवं सो धणलुद्धो रमणीझाणेण मयणसरविद्धो । दुज्झवसायाणुगओ न लहेइ रइं ससल्लुव्व ॥

तदा धवलः श्रेष्ठी कुमारस्य लीलां तथा रमणीयुगलं—स्त्रीद्वयं च पुनः ऋद्धिविस्तारं दृष्ट्वा—विलोक्य विशेषेण चलितं चित्तं यस्य स विचलितचित्तः सन् एवं—वक्ष्यमाणप्रकारेण चिन्तयितुं आरब्ध—आरम्भं कृतवान् चिन्तयितुं लग्न इत्यर्थः ॥ ६०३ ॥ अहहेतिखेदे अहो इत्याश्चर्ये एष श्रीपालो जनमात्र—एकाकिमनुष्यमात्रः सन् कीदृशीं श्रियं—लक्ष्मीं सम्प्राप्तः—प्राप्तवान्, अन्यच्च—अन्यत्पुनर्यस्य इदृशं रमणीयुगलं—पत्नीद्वयमस्ति स एष धन्यः ॥६०४॥ तत्—तस्मात् यदि एतस्य श्रीपालस्य श्री—लक्ष्मीः च पुनः रमणीयुगलं—स्त्रीद्वयं कथमपि—केनापि प्रकारेण मम भवति, तत्—तर्हि अहं कृतार्थो—निष्पन्नप्रयोजनो भवामि, अन्यथा एतयोः प्राप्त्यभावे मम जन्म अकृतार्थं—निष्फलमित्यर्थः ॥ ६०५ ॥ एवम्—अमुना प्रकारेण धनलुब्धः—परद्रव्यलोभयुक्तस्तथा मदनशरैः—कामबाणैर्विद्धः—ताडितोऽत एव दुरध्यवसायान्—दुष्टपरिणामान् अनुगतो—अभिव्याप्तः स धवलः सह शल्येन वर्त्तते इति सशल्य इव रतिं—मातं न लभते—न प्राप्नोति ॥ ६०६ ॥

इक्किल्लओवि लोहो बलिओ सो पुण सदप्पकंदप्पो । जलणुव्व पवणसहिओ संतावइ कस्स नो हिययं ? ॥
तत्तो सो गयनिद्दो सयणीअगओऽवि मज्झरयणीए । दुक्खेण टलवलंतो दिट्ठो तम्मित्तपुरिसेहिं ॥
पुट्ठो अ तेहिं को अज्ज तुज्झ अंगंमि बाहए वाही? । जेण न लहेसि निद्दं तो कहसु फुडं निअं दुक्खं ॥
कहकहवि सोवि दीहं नीससिऊणं कहेइ मह अंगं । वाही न बाहए किंतु बाहए मं दुरंताही ॥

एकाक्यपि लोभो बलिको-बलवान् अस्ति, च पुनः दर्प्पकन्दर्प्पाभ्यां-अभिमानकामाभ्यां सह वर्त्तमानः कस्य पुरुषस्य हृदयं-चित्तं नो सन्तापयति ?, सर्वस्यापि हृदयं सन्तापयतीत्यर्थः, क इव ?-पवनेन-वायुना सहितः-सँय्युक्तो ज्वलनो-वह्निरिव, यथा वायुप्रेरितो वह्निः सर्वस्यापि मनः सन्तापयेत्तथेत्यर्थः ॥ ६०७ ॥ ततः-तदनन्तरं स धवलो गता निद्रा यस्य स गतनिद्रः सन् मध्यरजन्यां-अर्द्धरात्रेऽपि शयनीयगतः-शय्यां प्राप्तो दुःखेन टलवलन् तस्य धवलस्य मित्रपुरुषैर्दृष्टः ॥ ६०८ ॥ च पुनः तैर्मित्रैः पृष्टः-अद्य तवाङ्गे को व्याधिः-रोगो बाधते ?-पीडामुत्पादयति, येन त्वं निद्रां न लभसे, ततः-तस्मात् त्वं स्फुटं-प्रकटं निजं-स्वकीयं दुःखं कथय ॥ ६०९ ॥ अथ स धवलोऽपि दीर्घं निःश्वस्य-दीर्घनिःश्वासं मुक्त्वा कथंकथमपि-महता कष्टेन कथयति, किं कथयतीत्याह-मम अङ्गं-शरीरं व्याधिर्न बाधते, किन्तु मां दुःखेन अन्तो यस्य स दुरन्त आधिः-मानसिकं दुःखं बाधते ॥ ६१० ॥

॥ ७० ॥

पुट्ठो पुणोवि तेहिं का सा तुह माणसी महापीडा ? । तो सो कहेइ सव्वं तं निअयं चिंतिअं दुट्ठं ॥
तं निसुणिऊण तेविहु भणंति चउरोऽवि मित्तवाणिअगा । हहहा किमियं तुमए भणिअं कन्नाण सूलसमं? ॥
अन्नस्सवि धणहरणं न जुज्जए उत्तमाण पुरिसाणं । जं पुण पहुणो उवयारिणो अ तं दारुणविवागं ॥
इअरिस्थीणवि संगो उत्तमपुरिसाण निन्दिओ लोए । जा सामिणीइ इच्छा सा तक्खयसिरमणिसरिच्छा ॥ ६१४ ॥

ततस्तैः पुनरपि पृष्टः सा तव मानसी-मनसि भवा महापीडा का ?, ततः स-धवलस्तत्सर्वं निजकं-स्वकीयं दुष्टं चिन्तितं कथयति ॥ ६११ ॥ तद्धवलचिन्तितं श्रुत्वा ते चत्वारोऽपि मित्रवाणिजका भणन्ति-जल्पन्ति, किं भणन्तीत्याह-हहहा इति खेदे त्वया कर्णानां शूलसमं-शूलतुल्यं किमिदं भणितं-उक्तम् ॥ ६१२ ॥ उत्तमानां पुरुषाणां अन्यस्यापि कस्यचिल्लोकस्य धनहरणं-द्रव्यापहरणं न युज्यते, यत्पुनः प्रभोः-स्वामिनः उपकारिणश्च धनहरणं तद् दारुणो-भयानको विपाकः-फलानुभवो यस्य तत्तादृगस्ति ॥ ६१३ ॥ उत्तमपुरुषाणां इत(र)स्त्रीणां-अन्यसामान्यलोकस्त्रीणामपि सङ्गः-संयोगो लोके निन्दितोऽस्ति, या पुनः स्वामिन्या इच्छा-अभिलाषः सा तक्षकस्य-नागराजस्य या शिरसो मणिस्तत्सदृशा-तत्तुल्येत्यर्थः महादुःखदायित्वात् ॥ ६१४ ॥

अन्नस्सवि कस्सवि पाणदोहकरणं न जुज्जए लोए । जं सामिपाणहरणं तं नरयनिबंधणं नूणं ॥
ता तुमए एरिसयं पावं कह चिंतियं निए चित्ते । जइ चिंतियं च ता कह कहियं तुमए सजीहाए? ॥
आसि तुमं अम्हाणं सामी मित्तं च इत्तिअं कालं । एरिसयं चिंतंतो संपइ पुण वेरिओ तंसि ॥
पोआण चालणं तं तह महकालाउ मोअणं तं च । विज्जाहराउ मोआवणं च किं तुज्झ वीसरियं ? ॥
एवंविहोवयाराण कारिणो जे कुणंति दोहमणं । दुज्जणजणेसु तेसिं नूणं धुरि कीरए रेहा ॥ ६१९ ॥

अन्यस्यापि कस्यापि जन्तोः प्राणेषु द्रोहकरणं–जिघांसाविधानं लोके न युज्यतेऽयुक्तमित्यर्थः, यत् स्वामिनः प्राणहरणं तन्नूनं–निश्चितं नरकस्य दुर्गतेर्निबन्धनं–कारणं वर्त्तते ॥ ६१५ ॥ तत्–तस्मात्कारणात् त्वया निजे चित्ते–स्वमनसि ईदृशं पापं कथं चिन्तितम् ? च पुनर्यदि चिन्तितं तत् तर्हि त्वया स्वजिह्वया कथं कथितं ? कथयतस्तव लज्जापि न समेतेति भावः ॥ ६१६ ॥ इयन्तं कालं यावत् त्वं अस्माकं स्वामी च मित्रं च आसीः–अभवः, सम्प्रति–इदानीं पुनः ईदृशं पापं चिन्तयन् त्वं अस्माकं वैरिको–वैरी असि ॥ ६१७ ॥ तत् पोतानां–देवतास्तम्भितप्रवहणानां चालनं, तथा महाकालनृपाद्बध्ध्वा व्रजतो मोचनं, तद्विद्याधरात्–विद्याधरराजात् मारयतो मोचनं किं तव विस्मृतम् ? । ६१८ ॥ एवंविधोपकाराणां कारिणः–कर्त्तुः पुरुषस्योपरि ये दुष्टा द्रोहयुक्तं मनः कुर्वन्ति, नूनं–निश्चयेन तेषां दुष्टानां रेखा दुर्जनजनेषु–दुष्टलोकेषु धुरि क्रियते ॥ ६१९ ॥

॥ ७१ ॥

मलिणा कुडिलगईओ परछिद्दरया य भीसणा डसणा । पयपाणेणवि लालयंतस्स मारंति दोजीहा ॥
पयडीयकुसीलयंगा कयकडुयमुहा य अवगणिअणेहा । मलिणा कढिणसहावा तावं न कुणंति कस्स खला ? ॥ ६२१ ॥

मलिणेत्यादि अस्या गाथाया अन्ते द्विजिव्हशब्दो द्व्यर्थवाचकोऽस्ति, द्विजिव्हः–खलपुरुषः सर्पश्चोच्यते, इहोभयोर्विशेषणसाम्येन तुल्यत्वं दर्शयन्नाह–द्विजिव्हाः–खलाः सर्पाश्च पयःपानेन–दुग्धपायनेन लालयन्तं–पालयन्तमपि पुरुषं मारयन्ति, उभयेऽपि कीदृशाः ? इत्याह–मलिना–वर्णतो भावतश्च मलीमसाः, पुनः कुटिला–वक्रा गतिः–गमनं चेष्टा च येषां ते तथोक्ताः, च पुनः परच्छिद्रेषु–परकीयदोषेषु परजन्तुनिवासविवरेषु च रता–रक्ताः पुनः भीषणा–भयानकाः तथा दशना–जिह्वया दंष्ट्राभिश्च परघातकारकाः ॥ ६२० ॥ अथ ज्वरोपमया दुर्जनस्वरूपं दर्शयन्नाह–इहानुक्तमपि ज्वरा इति उपमानपदमर्थसम्बन्धाद् ग्राह्यं, ततोऽयमन्वयः–खलाः–दुर्जनाः पुरुषा ज्वरा इव कस्य तापं न कुर्वन्ति ? सर्वस्यापि कुर्वन्तीत्यर्थः, उभयेऽपि कीदृशा इत्याह–प्रकटिता–प्रकटीकृता कुशीलता–कुत्सितस्वभावता अङ्गे–शरीरे यैस्ते तथा (कृतानि कटुकानि मुखानि यैस्ते) तथाऽवगणिताः–अनादरविषयीकृतः स्नेहः–प्रेम यैस्ते ज्वरपक्षेऽवगणितः स्नेहो–घृतादिर्येषु सत्सु, तथा मलिना एके भावतोऽन्ये देहमालिन्योत्पादकत्वात् अत एव उभयेऽपि कठिनस्वभावाः कठिनः स्वभावो येषां ते तथोक्ताः ज्वरपक्षे देहे काठिन्योत्पादनात् ॥ ६२१ ॥

विरसं भसंति सविसं डसंति जे छन्नमिंति सुंघंता। ते कस्स लद्धछिद्दा दुज्जणभसणा सुहं दिंति ?॥
ता तं न होसि धवलो कालोऽसि इमाइ किण्हलेसाए। ता तुज्झ दंसणेणावि मालिन्नं होइ अम्हाणं॥
इअ भणिअ गया निअय ठाणेसुं जाव तिन्नि वरपुरिसा। तुरिओ कुडिलसहावो पुणोवि तप्पासमासीणो॥
सो जंपइ धवलं पइ न कहिज्जइ एसिमेरिसं मंतं। जं एए अरिभूया तुह अहिअं चेव चिंतंति॥

अथ श्वानोपमया दुर्जनस्वरूपं दर्शयन्नाह-ते दुर्जनाः-खला एव भषणाः-श्वाना दुर्जनभषणा लब्धं छिद्रं-छलं यैस्ते लब्धच्छिद्राः सन्तः कस्मै सुखं ददति ?, न कस्मै अपीत्यर्थः, ते के इत्याह-ये विगतो रसो-मधुरात्मको यस्मात्तद्विरसं यथा-स्यात्तथा भषन्ति-परं भर्त्सयन्ति श्वानपक्षेऽव्यक्तं जल्पन्ति, पुनः सविषं-विषसहितं यथा स्यात्तथा दशन्ति, तथा पुनर्ये छन्नं-प्रच्छन्नं यथा स्यात्तथा शिङ्घन्तो-जिघ्राणा आयन्ति दुर्जनपक्षे सविषं दशनं परस्य विनाशकृच्छिद्रप्रकाशनं परच्छिद्र-विलोकनार्थं प्रच्छन्नागमनं च बोध्यम् ॥ ६२२ ॥ तत्-तस्मात्कारणात् त्वं धवलो न भवसि, किन्तु अनया कृष्णलेश्यया कालोऽसि, तस्मात्तव दर्शनेनापि अस्माकं मालिन्यं-मलिनत्वं भवति ॥ ६२३ ॥ इति भणित्वा-उक्त्वा यावत् त्रयो वर-पुरुषाः-प्रधानपुरुषाः निजनिजस्थानेषु गताः तावत्कुटिलो-वक्रः स्वभावो यस्य स कुटिलस्वभावस्तुर्यः-चतुर्थः पुरुषः पुन-रपि तस्य धवलस्य पार्श्वे आसीन-उपविष्टः ॥ ६२४ ॥ स पुमान् धवलं प्रति जल्पति-कथयति, अहो श्रेष्ठिन् ! ईदृशो मन्त्रः-आलोचः एभ्यस्त्रिभ्यो न कथ्यते, यद्-यस्मात्कारणात् एतेऽरिभूताः-शत्रुतुल्यास्तव-अहितमेव चिन्तयन्ति ॥ ६२५ ॥

इक्कोऽहं तुह मणवंछियत्थसंसाहणिक्कतल्लिच्छो। अच्छामि ता तुमं मा निअचित्ते किंपि चिंतेसु॥
किंतु विसेसेण तुमं सिरिपालेणं समं कुणसु मित्तिं। जं सो वीसत्थमणो अम्हाणं सुहहओ होइ॥
तो धवलो तुट्ठमणो भणइ तुमं चेव मज्झ वरमित्तो। किं तु मह वंछियाणं सिद्धी होही कहं कहसु॥
सो आह जुज्झणत्थं दोराधारेण मंडिए मंचे। कह कहवि तं चडाविअ केणवि कोऊहलमिसेणं॥
छन्नं चिय छिन्ने दोरयंमि सो निच्छयं समुद्दंमि। पडिही तो तुह वंछियसिद्धी होही निरववायं॥

एकोऽहं तव मनोवाञ्छितार्थसंसाधने एका सा एव लिप्सा यस्य सः, त्वन्मनश्चिन्तितार्थसम्यक्साधनतत्पर इत्यर्थः 'अच्छामि' त्ति स्थितोऽस्मि तस्मात् त्वं निजचित्ते किमपि मा चिन्तय-कामपि चिन्तां मा कृथा इत्यर्थः ॥ ६२६ ॥ किन्तु त्वं श्रीपालेन समं-सार्द्धं विशेषेण मैत्र्यं कुरुष्व, यद्-यस्मात्कारणात् विश्वस्तं-विश्वासयुक्तं मनो यस्य स विश्वस्तमनाः सन् स-श्रीपालोऽस्माकं सुखहतो भवति, सुखेन हतं-हननं यस्य स इति समासः ॥ ६२७ ॥ ततो धवलस्तुष्टं मनो यस्य स तुष्टमनाः सन् भणति-कथयति, मम वरमित्रं प्रधानसुहृद् त्वमेवासि, किन्तु मम वाञ्छितानां सिद्धिः कथं भविष्यति त्वं कथय ॥ ६२८ ॥ स आह-योधनार्थं-युद्धादिकरणार्थं दवरकाधारेण मण्डिते मञ्चे कथंकथमपि-केन केनापि प्रका-रेण केनापि कुतूहलमिषेण-कौतुकव्याजेन तं श्रीपालं 'चडाविय' त्ति आरोह्य ॥ ६२९ ॥ छन्नं-प्रच्छन्नमेव दवरके छिन्ने सति सः-निश्चयतः समुद्रे पतिष्यति, ततः-तदनन्तरं निरपवादं यथा स्यात्तथा तव वाञ्छितस्य सिद्धिः-निष्पत्तिः भविष्यति, निर्गतः अपवादो-लोकनिन्दा यत्र कर्मणि तन्निरपवादमिति क्रियाविशेषणम् ॥ ६३० ॥

तो संतुट्ठो धवलो कुमरसहाए करेइ केलीओ। बहुहासपेसलाओ तहा जहा हसइ कुमरोऽवि ॥
अन्नदिणे सो उच्चे मंचे धवलो सयं समारूढो। सिरिपालं पइ जंपइ पिच्छह पिच्छह किमेयंति ॥
दीसइ समुद्दमज्झे अदिट्ठपुव्वं मइत्ति जंपंतो। उत्तरइ सयं तत्तो कहेइ कुमरस्स सविसेसं ॥ ६३३॥
कुमर! अपुव्वं कोऊहलंति तुज्झवि पलोयणसरिच्छं। जं जीवियाउ बहुअं दिट्ठं पवरं भणइ लोओ ॥
तो सहसा कुमरोऽवि हु चडिओ जा तत्थ उच्चए मंचे। ता मंचदोरछेओ विहिओ य कुमंतिणा तेण॥

ततो धवलः सन्तुष्टः सन् कुमारस्य सभायां बहुहासेन पेशला-रम्याः केलयः-क्रीडास्तथा-तेन प्रकारेण करोति यथा श्रीपालकुमरोऽपि हसति-मनाक् हास्यं करोति ॥६३१॥ अन्यस्मिन् दिने स धवलः स्वयम्-आत्मना उच्चे मञ्चे समारूढः सन् श्रीपालं प्रति इति जल्पति-कथयति, इतीति किं ?-भो यूयं प्रेक्षध्वं प्रेक्षध्वं किमेतत् वारिधावस्तीति शेषः ॥ ६३२ ॥ मया न पूर्वं दृष्टं-अदृष्टपूर्वं समुद्रमध्ये दृश्यते इति जल्पन् धवलः स्वयं ततो मञ्चादुत्तरति, पुनः कुमाराय सविशेषं कथयति, किं कथयतीत्याह ॥ ६३३ ॥ हे कुमार ! अपूर्वं कुतूहलं एतत् इतिहेतोस्तवापि प्रलोकनसदृक्षं-दर्शनसदृशं विद्यते, यद्-यस्मात्कारणात् लोके जीविताद्बहुकं दृष्टं प्रवरं-प्रधानं भणति-वदति ॥ ६३४ ॥ ततः-तदनन्तरं कुमारोऽपि सहसा-अकस्मात् यावत्तत्र उच्चके मञ्चे चटित-आरूढः तावत्तेन कुमन्त्रिणा-कुबुद्धिमित्रेण मञ्चदवरकच्छेदो विहितः-कृतः ॥ ६३५ ॥

तो सहसा मंचाओ कुमरोऽवि पडंतओ नवपयाइं। झाएइ तक्खणं चिय पडिओ मगरस्स पुट्ठीए ॥
नवपयमाहप्पेणं ओसहियबलेण मगरपुट्ठि ठिओ। खणमित्तेणावि कुमरो सुहेण कुंकुणतडे पत्तो ॥
तत्थ य वणंमि कत्थवि चंपयतरुवरतलंमि सो सुत्तो। जा जग्गइ तो पिच्छइ सेवापर सुहडपरिवेढं ॥
विणओणएहिं तेहिं भडेहिं पंजलिउडेहिं विन्नत्तं। देव ! इह कुंकणक्खे देसे ठाणाभिहाणपुरे ॥६३९ ॥
वसुपालो नाम निवो तेणं अम्हे इमं सामाइट्ठा। जलहितडे जं अचलंतछायतरुतलसमासीणं ॥

ततः सहसा-सद्यो मञ्चात् पतन् कुमारोऽपि नव पदानि ध्यायति, तद्ध्यानप्रभावात् तत्क्षणं-तत्कालमेव मकरस्य-महामत्स्यविशेषस्य पृष्ठौ पतितः ॥ ६३६ ॥ ततो नवपदमाहात्म्येन औषधिकाबलेन च मकरस्य पृष्ठौ स्थितः सन् कुमारः क्षणमात्रेणापि सुखेन कुङ्कुणतटे प्राप्तः ॥ ६३७ ॥ तत्र च कुत्रापि वने चम्पकश्चासौ तरुवरश्च-प्रधानवृक्षस्तस्य तले स श्रीपालः सुप्तो-निद्रां प्राप्तः, ततो यावज्जागर्त्ति तावत्सेवापरैः सुभटैः परिवेष्टं-आत्मानं परिवेष्टितं प्रेक्षते-पश्यति ॥ ६३८ ॥ विनयेन अवनतैः-नम्रैरत एव प्राञ्जलिपुटैः-बद्धाञ्जलिभिस्तैर्भटैर्विज्ञप्तम् , तथाहि-हे देव ! इह-अस्मिन् कुङ्कणाख्ये देशे स्थानाभिधाने-स्थानाख्ये पुरे-नगरे ॥ ६३९ ॥ वसुपालो नाम नृपो-राजाऽस्ति, तेन राज्ञा वयं इदं-वक्ष्यमाणं समादिष्टाः, इदं किमित्याह-जलधितटे समुद्रतीरे अचलन्ती छाया यस्य सः अचलच्छायो यस्तरुः-वृक्षस्तस्य तले समासीनं-उपविष्टं ॥६४०॥

पिच्छेह पुरिसरयणं अज्जदिणे चेव पच्छिमे जामे । तं तुरियं चिय तुरयारूढं काऊण आणेह ॥६४१॥
ता अम्हेहिं तुमं चिय दिट्ठोऽसि जहुत्ततरुतलासीणो। सामिय ! पुन्नवसेणं ता तुरियं तुरयमारुहह ॥
कुमरोऽवि हयारूढो तेहिं सुहडेहिं चेव परियरिओ । खणमित्तेणवि पत्तो ठाणयपुरपरिसरवणंमि ॥
तस्साभिमुहं रायावि मंतिसामंतसंजुओ एइ । महया महेण कुमरं पुरे पवेसेइ कयसोहे ॥ ६४४ ॥
काऊण य पडिवत्तिं तस्स कुमारस्स असणवसणेहिं । पभणेइ सबहुमाणं राया एयारिसं वयणं ॥

यं पुरुषरत्नं अद्यदिन एव पश्चिमे यामे–पाश्चात्ये प्रहरे प्रेक्षध्वं–यूयं विलोकयत, तं पुरुषं त्वरितं–शीघ्रमेव तुरगारूढं–अश्वारूढं कृत्वा आनयत ॥ ६४१ ॥ अयं नृपादेशोऽस्ति तस्मात् हे स्वामिन् ! अस्माभिर्यथोक्ततरुतले आसीनस्त्वमेव पुण्यवशेन दृष्टोऽसि–निरीक्षितोऽसि, तस्मात्त्वरितं–शीघ्रं तुरगम्–अश्वं आरोहत यूयम् ॥ ६४२ ॥ कुमारोऽपि हयारूढो–अश्वारूढः तैरेव सुभटैः परिकरितः–परिवृतः क्षणमात्रेणापि स्थानपुरस्य पार्श्ववर्त्तिवने प्राप्तः ॥ ६४३ ॥ राजा वसुपालोऽपि मन्त्रिसामन्तैः संयुतः–सहितस्तस्य श्रीपालस्य अभिमुखं–सम्मुखं प्रति गच्छति, कृता शोभा यस्य तत् कृतशोभं तस्मिन् पुरे–नगरे महता महेन–उत्सवेन कुमारं प्रवेशयति ॥ ६४४ ॥ च पुनः तस्य कुमारस्य असनवसनैः–भोजनवस्त्रैः प्रतिपत्तिं–भक्तिं कृत्वा राजा–वसुपालः सबहुमानं–बहुमानसहितं एतादृशं वचनं प्रकर्षेण भणति–कथयति ॥ ६४५ ॥



पुव्विं सहाइ पत्तो एगो नेमित्तिओ मए पुट्ठो । को मयणमंजरीए मह पुत्तीए वरो होही ?॥६४६॥
तेणुत्तं जो वइसाहसुद्धदसमीइ जलहितीरवणे । अचलंतछायतरुतलठिओ हवइ सो इमीइ वरो ॥
अज्जं चिय तंसि तहेव पाविओ वच्छ ! पुण्णजोएणं । ता मयणमंजरिमिमं मह धूयं झत्ति परिणेसु ॥
एवं भणिऊण नरेसरेण अइवित्थरेण वीवाहं । काराविऊण दिन्नं हयगयमणिकंचणाईयं ॥ ६४९ ॥
तत्तो सिरिसिरिपालो नरनाहसमप्पियंमि आवासे । भुंजइ सुहाइं जं पुन्नमेव मूलं हि सुक्खाणं ॥

कीदृशमित्याह–पूर्वं मम सभायां प्राप्तः एको नैमित्तिको मया पृष्टः मम पुत्र्या मदनमञ्जर्याः को वरो–भर्ता भविष्यति ? ॥ ६४६ ॥ एवं मया पृष्टे सति तेन नैमित्तिकेनोक्तं–यो वैशाखसुदिदशम्यां जलधेः–समुद्रस्य तीरे यद्वनं तस्मिन् अचलच्छायस्य तरोस्तले स्थितो भवति स पुमान् अस्या वरो भावी ॥ ६४७ ॥ अद्यैव हे वत्स ! पुण्ययोगेन तथैव–नैमित्तिकोक्तप्रकारेणैव त्वं प्राप्तोऽसि, तस्मात् कारणात् इमां मदनमञ्जरीं मम पुत्रीं झटिति–शीघ्रं परिणयस्व ॥ ६४८ ॥ एवं भणित्वा–उक्त्वा नरेश्वरेण–राज्ञाऽतिविस्तारेण विवाहं–पाणिग्रहणं कारयित्वा हयगजमणिकाञ्चनादिकं–अश्वहस्तिरत्नस्वर्णादिकं दत्तम् ॥ ६४९ ॥ ततः–तदनन्तरं श्रीमान् श्रीपालो नरनाथेन–राज्ञा समर्पिते आवासे–मन्दिरे सुखानि भुङ्क्ते–अनुभवति, यद्–यस्मात्कारणात् सुखानां मूलं कारणं पुण्यमेवास्ति, पुण्यवान् यत्र गच्छति तत्र सुखमेवानुभवतीत्यर्थः ॥६५०॥

रन्नो दिंतस्सवि देसवासगामाइआहिवत्तंपि । कुमरो न लेइ इक्कं थइयाइत्तं नु मग्गेइ ॥ ६५१ ॥
राया तं हीणंपि हु कम्मं दाऊण तस्स तुट्ठिकए । अच्चंतमाणणिज्जाण तेण दावेइ तंबोलं ॥ ६५२ ॥
इओ य–जइया समुद्दमज्झे पडिओ कुमरो तया धवलसिट्ठी । तेण कुमित्तेण समं संतुट्ठो हिययमज्झंमि ॥
लोयाण पच्चयत्थं धवलो पभणेइ अहह किं जायं । जं अम्हाणं पहु सो कुमरो पडिओ समुद्दंमि ॥ ६५४ ॥
हिययं पिट्टेइ सिरं च कुट्टए पुक्करेइ मुक्कसरं । धवलो मायाबहुलो हा कत्थ गओऽसि सामि ! तुमं ? ॥

देशवासग्रामादेराधिपत्यं–स्वामित्वमपि ददतोऽपि राज्ञः सकाशात् कुमरो न लाति–न गृह्णाति, नु इति विशेषे एकं 'थइयाइत्तं' ति स्थगीधरत्वं–ताम्बूलदानाधिकारित्वं मार्गयति ॥ ६५१ ॥ राजा वसुपालस्तस्य कुमारस्य तुष्टिकृते–तोषनिमित्तं हीनमपि तत्ताम्बूलदानलक्षणं कर्म्म दत्त्वाऽत्यन्तमानीयेभ्यः पुरुषेभ्यस्तेन श्रीपालेन ताम्बूलं दापयति ॥ ६५२ ॥ इतश्च–यदा कुमारः समुद्रमध्ये पतितस्तदा धवलाख्यश्रेष्ठी तेन कुमित्रेण समं–सह हृदयमध्ये सन्तुष्टः सञ्जातः ॥ ६५३ ॥ लोकानां प्रत्ययार्थं–प्रतीत्युत्पादनार्थं धवलः प्रकर्षेण भणति, अहहेति खेदे किं जातं ?, कुत्सितं कार्यं जातमित्यर्थः, यत्–यस्मात्कारणात् अस्माकं प्रभुः–स्वामी स कुमारः समुद्रे पतितः ॥ ६५४ ॥ अथ माया बहुला–प्रचुरा यस्य स मायाबहुलो धवलः श्रेष्ठी हृदयं–वक्षस्थलं पिट्टयति, च पुनः शिरो–मस्तकं कुट्टयति, पुनर्मुक्तः स्वरो यत्र कर्म्मणि तत् मुक्तस्वरं यथा स्यात्तथा पूत्करोति–पूत्कारं करोति, कथमित्याह–हा इति खेदे हे स्वामिन् ! त्वं कुत्र गतोऽसि ? एवं पूत्करोति स्मेत्यर्थः ॥ ६५५ ॥

तं सोऊणं मयणाउ ताओ हाहारवं कुणंतीओ । पडियाउ मुच्छियाओ सहसा वज्जाहयाओव्व ॥
जलणिहिसीयलपवणेण लद्धसंचेयणाउ ताउ पुणो । दुक्खभरपूरियाओ विमुक्कपुक्काउ रोयंति ॥
हा पाणनाह गुणगणसणाह हा तिजयसारउवयार । हा चंदवयण हा कमलनयण हा
रूवजियमयण ॥ ६५८ ॥
हाहा हीणाण अणाहयाण दीणाण सरणरहियाणं । सामिय ! तए विमुक्काण सरणमम्हाण को होही ? ॥

तं–धवलं कृतपूत्कारं श्रुत्वा ते मदनसेनामदनमञ्जूषे हाहारवं कुर्वत्यौ सहसा–अकस्मात् वज्रेण आहते इव मूर्च्छिते पतिते ? मूर्च्छां प्राप्य पतिते इत्यर्थ ॥ ६५६ ॥ जलनिधेः–समुद्रस्य शीतलपवनेन–शिशिरवायुना लब्धा प्राप्ता संचेतना–सम्यक्चेतना याभ्यां ते लब्धसञ्चेतने ( दुखस्य भरः–समूहस्तेन पूरिते ) भरिते अत एव 'विमुक्कपुक्काओ' ति विमुक्तपूत्कारे सत्यौ रुदितो–रोदनं कुरुतः ॥ ६५७ ॥ कथं रुदित इत्याह–हा इतिखेदे हे प्राणनाथ हे गुणगणैःसनाथ–सहित हा त्रिजगति सार उपकारो यस्य तत्सम्बुद्धौ हे त्रिजगत्सारोपकार ! हा चन्द्रवदन–चंद्रवद्वदनं–मुखं यस्य तत्सम्बुद्धौ हे चन्द्रवदन हा कमलनयन–कमलवन्नयने–नेत्रे यस्य तत्सम्बुद्धौ हे कमलनयन हा रूपजितमदन–रूपेण जितो मदनः–कामो येन तत्सम्बुद्धौ हे रूपजितमदन ! ॥ ६५८ ॥ हाहा इतिखेदे हे स्वामिन् ! त्वया विमुक्तयोः–त्यक्तयोरत एव शरणरहितयोरावयोः कः शरणं भविष्यतीति ?, कीदृशयोरावयोः ?–हीनयोः पुनरनाथयोः तथा दीनयोः इत्थं तयो रोदनं श्रुत्वा ॥ ६५९ ॥

तो धवलो सुयणो इव जंपइ सुयणू ! करेह मा खेयं । एसोऽहं निच्चंपि हु तुम्हं दुक्खं हरिस्सामि ॥६६०॥
तं सोऊणं ताओ सविसेसं दुक्खियाउ चिंतंति । नूणमणेणं पावेण चेव कयमेरिसमकज्जं ॥ ६६१ ॥
 इत्थंतरे उच्छलियं जलेहिं, वियंभियं उब्भडमारुएहिं । समुन्नयं घोरघणावलीहिं, कडक्कियं रुद्दतडिल्लियाहिं ॥ ६६२ ॥
घोरंधयारेहिं विवड्ढियं च, रउद्दसद्देहिं समुट्ठियं च । अट्टट्टहासेहिं पयट्टियं च, सयं च उप्पायसएहिं जायं॥

ततः-तदनन्तरं धवलः श्रेष्ठी स्वजन इव जल्पति, हे सुतनू-हे शोभनाङ्ग्यौ युवां मा खेदं कुरुतं, एषोऽहं नित्यमपि हु इति निश्चितं युवयोः-भवत्योर्दुःखं हरिष्यामि-दूरीकरिष्यामि ॥ ६६० ॥ ततस्तद्वचनं श्रुत्वा ते स्त्रियौ सविशेषं दुःखिते सत्यौ चिन्तयतः, किं चिन्तयत इत्याह-नूनं-निश्चितं अनेन पापेन-क्रूरेणैव ईदृशं अकार्यं कृतमिति ज्ञायते ॥ ६६१ ॥ अत्रान्तरे-अस्मिन्नवसरे जलैः-समुद्रपानीयैः उच्छालितं, तथा उद्भटमारुतैः-दुस्सहवायुभिर्विजृम्भितं-विस्तृतं, तथा घोरघनावलीभिः-भयानकमेघमालाभिः समुन्नतं-उन्नम्यागतं, तथा रुद्रतडिल्लताभिः-भयङ्करविद्युद्भिः कडकितं अनुकरणशब्दोऽयम् ॥ ६६२ ॥ च पुनः घोरान्धकारैर्विशेषेण वर्द्धितम्, च पुनः रौद्रशब्दैः-भयानकध्वनिभिः समुत्थितं, च पुनः अट्टट्टहासैः प्रवर्त्तितं, च पुनः स्वयम्-आत्मना उत्पातशतैः-उपद्रवशतैर्जातं-उत्पन्नं, अत्र पद्यद्वये सर्वा अपि भावोक्तयो ज्ञेयाः ॥६६३॥ 

तत्तो हल्लोहलिएसु तेसु पोएसु पोयलोएहिं । खलभलिअं जलजलिअं कलकलिअं मुच्छियं च खणं ॥
डमडमडमंतडमरुयसद्दो अच्चंतरुद्दरूवधरो । पढमं च खित्तवालो पयडीहूओ सकरवालो ॥ ६६५ ॥
तो माणिपुन्नभद्दा कविलो तह पिंगलो इमे चउरो । गुरुमुग्गरवग्गकरा पयडीहूआ सुरा वीरा ॥
कुमयंजणवामणपुप्फदंतनामेहिं दंडहत्थेहिं । पयडीहूअं च तओ चउहिंवि पडिहारदेवेहिं ॥ ६६७ ॥

ततस्तेषु पोतेषु-प्रवहणेषु हल्लोहलितेषु-अतिव्याकुलीभूतेषु सत्सु पोतलोकैः-सांयात्रिकजनैः खलभलितं पुनः जलजलितं पुनः कलकलितं-कलकलशब्दयुक्तैर्जातं च पुनः क्षणं यावन्मूर्च्छितम् ॥ ६६४ ॥ ततः किं जातमित्याह- प्रथमं क्षेत्रपालः प्रकटीभूतः, कीदृशः ?-डमडमडमेति अन्तः-स्वरूपं यस्य स एवंविधो डमरुकस्य-वाद्यविशेषस्य शब्दो यस्य स डमडमडमान्तडमरुकशब्दः, पुनः अत्यन्तरौद्रं रूपं धरतीति अत्यन्तरौद्ररूपधरः पुनः सह करवालेन-खड्गेन वर्त्तते इति सकरवालः ॥ ६६५ ॥ ततो माणिभद्र १ पूर्णभद्रौ २ कपिलः ३ तथा पिङ्गलः ४ इमे चत्वारो वीराः सुराः प्रकटीभूताः, कीदृशाः ? गुरुः-महान् यो मुद्गरः-शस्त्रविशेषस्तेन व्यग्रा-व्याकुलाः करा-हस्ता येषां ते गुरुमुद्गरव्यग्रकराः ॥ ६६६ ॥ च पुनः ततः-तदनन्तरं कुमुदा १ ऽञ्जन २ वामन ३ पुष्पदन्त ४ नामभिश्चतुर्भिरपि प्रतिहारदेवैः प्रकटीभूतं, कीदृशैः ?-दण्डः हस्तेषु येषां ते दण्डहस्तास्तैः ॥ ६६७ ॥

चक्केसरी अ देवी जलंतचक्कदुयं भमाडंती। बहुदेवदेविसहिया पयडीहूआ भणइ एवं ॥ ६६८ ॥
रेरे गिएहह एयं पढमं दुब्बुद्धिदायगं पुरिसं। जं सव्वाणत्थाणं मूलं एसुच्चिय न अन्नो ॥ ६६९ ॥
तो झत्ति खित्तवालेण सो नरो बंधिऊण पाएहिं। अवलंबिओ य कूवयथंभंमि अहोमुहं काउं ॥
दाऊण मुहे असुइं खग्गेणं छिन्निऊण अंगाइं। सो दिसिपालाण बलिव्व दिन्नओ संतिकरणत्थं ॥
तत्तो सो भयभीओ धवलो मयणाण ताण पिट्ठिठिओ। पभणेइ ममं रक्खह रक्खह सरणागयं नियय़ं ॥

च पुनः चक्रेश्वरीदेवी प्रकटीभूता सती एवं–वद्यमाणप्रकारेण भणति, कीदृशी देवी?–ज्वलद्–दीप्यमानं करद्वये चक्रद्वयं भ्रामयन्तीति, पुनः बहुभिर्देवैः देवीभिश्च सहिता–परिवृता ॥ ६६८ ॥ किं भणतीत्याह–रे रे देवा! यूयं प्रथमं एतं दुर्बुद्धिदायकं पुरुषं गृह्णीत यद्–यस्मात्कारणात् सर्वेषामनर्थानां मूलं एष एव पुरुषोऽस्ति, नाऽन्यः ॥ ६६९ ॥ ततः क्षेत्रपालेन झटिति–शीघ्रं स नरः पादाभ्यां बध्ध्वा तस्य मुखं अधः कृत्वा कूपस्तम्भेऽवलम्बितश्च स पुमान् ॥ ६७० ॥ तस्य मुखे अशुचिं–विष्ठां दत्वा खड्गेन अङ्गानि–बाह्वादीनि छित्वा स दुष्टपुरुषो दिक्पालेभ्यो बलिरिव–उपहार इव शान्तिकरणार्थं दत्तः, अङ्गानि खण्डशः कृत्वा दशदिक्षु विक्षिप्त इत्यर्थः ॥ ६७१ ॥ ततो भयभीतः स धवलस्तयोर्मदनसेनामदनमञ्जूषयोः पृष्ठे स्थितः सन् प्रभणति–प्रकर्षेण कथयति, किमित्याह–निजकं–स्वकीयं शरणागतं मां रक्षतं रक्षतम् ॥ ६७२ ॥



ता चक्केसरिदेवी पभणइ हे दुट्ठ धिट्ठ पाविट्ठ। एयाण सरणगमणेण चेव मुक्कोऽसि जीवंतो ॥
विणओणयाउ ताओ मयणाओ दोवि विम्हियमणाओ। भणियाओ देवीए सपसायं एरिसं वयणं ॥
वच्छा! वल्लह तुम्हतणउ गरुईरिद्धिसमेउ। मासब्भिंतरि निच्छइण मिलिसइ धरहु म खेउ ॥
एम भणेविणु चक्कहरि परिमलगुणिहिं विसाल। मयणह कंठिहिं पक्खिवइ सुरतरुकुसुमह माल ॥
तुम्हह दुट्ठु न देखिसिइ मालह तणइ पमाणि। एम भणेविणु चक्कहरि देवी गई नियठाणि ॥६७७॥

ततश्चक्रेश्वरीदेवी प्रभणति–रे दुष्ट धृष्ट पापिष्ट एतयोर्महासत्योः शरणगमनेनैव त्वं जीवन्मुक्तोऽसि ॥ ६७३ ॥ विनयेन अवनते–नम्रे पुनर्विस्मितं–आश्चर्यप्राप्तं मनो ययोस्ते विस्मितमनसौ ते द्वे अपि मदने देव्याश्चक्रेश्वर्याः सप्रसादं–प्रसादसहितं यथा स्यात्तथा ईदृशं वचनं भणिते ॥ ६७४ ॥ हे वत्से–हे पुत्र्यौ युवयोर्वल्लभो–भर्त्ता गुर्व्या–महत्या ऋद्ध्या समेतः–संयुक्तो मासाभ्यन्तरे–मासमध्ये निश्चयेन मिलिष्यति, युवां खेदं मा धरताम् ॥ ६७५ ॥ एवं भणित्वा–उक्त्वा चक्रधरा–चक्रेश्वरीदेवी मदनसेनामदनमञ्जूषयोःकण्ठयोर्विषये परिमलगुणैर्विशाले–विस्तीर्णे सुरतरुकुसुमानां–कल्पवृक्षपुष्पाणां माले प्रक्षिपति ॥ ६७६ ॥ मालयोः प्रमाणेन–प्रभावेनेत्यर्थः युवाभ्यां दुष्टः पुमान् न द्रक्ष्यति–न विलोकयिष्यतीत्यर्थः, एवं भणित्वा चक्रधरा–चक्रेश्वरीदेवी निजस्थाने गता, स्वस्थानं गतवतीत्यर्थः ॥ ६७७ ॥

एतानि त्रीण्यपि दोहाछंदांसि बोध्यानि ॥ पभणंति तओ तिन्निवि, ते पुरिसा सरलबुद्धिणो धवलं।
दिट्ठं कुबुद्धिदायगफलं तए एरिसविवागं ॥ ६७८ ॥

एयाणं च सईणं सरणपभावेण जइवि जीवंतो । छुट्टोऽसि तहवि पावं पुणो करंतो लहसिऽणत्थं ॥

जो पररमणीरमणिक्कलालसो होइ रागगहगहिओ । जइ सो वुच्चइ पुरिसो ता के खरकुक्कुरा अन्ने ? ॥

धिद्धी ताण नराणं जे पररमणीण रूवमित्तेणं । खुहिआ हणंति सव्वं कुलजससग्गापवग्गसुहं ॥

ततः–तदनन्तरं ते त्रयोऽपि सरलबुद्धयः–ऋजुबुद्धिधराः पुरुषाः धवलं प्रभणन्ति–कथयन्ति, किं भणन्तीत्याह–हे धवल ! ईदृशो विपाकः–परिपाको यस्य तत् ईदृशविपाकं कुबुद्धिदायकस्य फलं त्वया दृष्टम् ॥ ६७८ ॥ च पुनः एतयोः सत्योः शरणप्रभावेण यद्यपि त्वं जीवन् छुटितोऽसि तथापि पुनः पापं कुर्वन् अनर्थं लभसे ?–प्राप्स्यसीत्यर्थः ॥ ६७९ ॥ यः पुमान् पररमणीभिः–परस्त्रीभिः सह रमणे एका लालसा–तृष्णा यस्य स एवंविधो भवति, कीदृशः सन् ?–रागः–कामराग एव ग्रहस्तेन गृहीतः सन्, यदि स पुमानपि पुरुष उच्यते तत्–तर्हि मनुष्यरूपेण खरकुर्कुरा–गर्दभश्वाना अन्ये के उच्यन्ते ॥६८०॥ तान् नरान् धिग् धिगस्तु–धिक्कारोऽस्तु ये पररमणीनां रूपमात्रेण क्षुभिताः–चलिताः सन्तः सर्वं कुलयशःस्वर्गापवर्गसुखं घ्नन्ति–विनाशयन्ति, कुलं–उच्चैर्गोत्रं यशः–कीर्त्तिः स्वर्गसुखं प्रतीतं अपवर्गसुखं–मोक्षसुखं, एतेषां समाहारद्वन्द्वः ॥ ६८१ ॥ ॥ ७८ ॥

जलहिंमि वहंताणं पोआणं जाव कइवयदिणाइं । जायाइं तओ पुणरवि धवलो चिंतेइ हिययंमि ॥

अत्थि अहो मह पुन्नोदयत्ति जं सो उवद्दवो टलिओ । फलिया एसा य सिरी सव्वावि सुहेण मज्झेव ॥

जइ रमणीओ एयाओ कहावि मन्नंति मह कलत्तत्तं । ताऽहं होमि कयत्थो इंदाओ वा समब्भहिओ ॥

इअ चिंतिऊण तेणं जा दूइमुहेण पत्थिया ताओ । ता ताहिं कुवियाहिं दूई निब्भत्थिया बाढं ॥

तहविहु कामपिसायाहिट्ठिओ नट्ठनिम्मलविवेओ । तेणज्झवसाएणं खणंपि पावेइ नो सुक्खं॥६८६॥

जलधौ–समुद्रे वहतां पोतानां–प्रवहणानां यावत् कतिपयानि–कियन्ति दिनानि जातानि ततः पुनरपि धवलो हृदये चिन्तयति, किं चिन्तयतीत्याह ॥ ६८२ ॥ अहो इति आश्चर्ये मम पुण्योदयोऽस्तीति, कथमित्याह–यद्-यस्मात् कारणात् सः–प्रागुक्तस्वरूप उपद्रवष्टलितश्च पुनः एषा सर्वापि श्रीः–लक्ष्मीः सुखेन ममैव फलिता–फलवती जाता, अथ मां विनाऽस्या अन्यः स्वामी क इत्यर्थः ॥ ६८३ ॥ यदि एते द्वे रमण्यौ–स्त्रियौ कथमपि–केनापि प्रकारेण मम कलत्रत्वं–वधूत्वं मन्येते तत्–तर्हि अहं कृतार्थो भवामि–निष्पन्नप्रयोजनः स्यामित्यर्थः, वाऽथवा इन्द्रादपि समभ्यधिकः स्याम् ॥ ६८४ ॥ इति चिन्तयित्वा तेन धवलेन यावत् दूतीमुखेन ते स्त्रियौ प्रार्थिते–प्रार्थनाविषयीकृते तावत् कुपिताभ्यां–क्रुद्धाभ्यां ताभ्यां मदनाभ्यां दूती बाढं–अत्यर्थं निर्भर्त्सिता–तर्जिता ॥ ६८५ ॥ तथापि हु इति–निश्चितं कामः–कन्दर्प एव पिशाचो–दुष्टव्यन्तरस्तेन अधिष्ठितः–आश्रितोऽत एव नष्टो निर्मलो विवेको यस्य स एवंविधः स धवलश्रेष्ठी तेन अध्यवसायेन–मनःपरिणामेन क्षणमपि सुखं न प्राप्नोति ॥ ६८६ ॥

अन्नदिणे सो नारीवेसं काऊण कामगहगहिलो । मयणाणं आवासं सयं पविट्ठो सुपाविट्ठो ॥
जाव पलोएइ तहिं ताव न पिच्छेइ ताउ मयणाओ । पुरओ ठिआउ मालाइसएण अदिस्सरूवाओ ॥
सो रागंधो अंधुव्व जाव भमडेइ तत्थ पवडंतो । तो दासीहिं सुणउव्व कड्ढिओ कुट्टिऊण बहिं ॥
इत्तो ते बोहित्था मग्गेणऽन्नेण निज्जमाणावि । सयमेव कुंकुणतडे पत्ता मासंमि किंचूणे ॥ ६९० ॥
पढमं उत्तरिऊणं धवलो जा जाइ पाहुडविहत्थो । रायकुलं ता पासइ नरवरपासंमि सिरिपालं ॥

अन्यस्मिन् दिने स धवलो नारीवेषं-स्त्रीवेषं-कृत्वा कामरूपग्रहेण ग्रथिलःसन् स्वयम्-आत्मना मदनयोः-श्रीपालस्त्रियोः आवासं-मन्दिरं प्रविष्टः, तयोरावासे प्रविष्टवानित्यर्थः, कीदृशः सः ?-सुतरामतिपापिष्टः सुपापिष्टः ॥६८७॥ यावत्तत्रावासे प्रलोकयति तावत् पुरतः-अग्रतः स्थिते ते मदने न प्रेक्षते-न पश्यति, कीदृश्यौ मदने ?-मालाऽतिशयेन-मालयोः प्रभावेण अदृश्यं रूपं ययोस्ते अदृश्यरूपे ॥ ६८८ ॥ स धवलो रागेण-कामरागेण अन्धः सन् अन्धः पुमानिव प्रपतन्-प्रकर्षेण पतन् यावत्तत्र मदनावासे भ्रमति तावद्दासीभिः-मदनयोश्चेटीभिः शुनकः-कुर्कुर इव कुट्टयित्वा बहिः 'कड्ढिओ' त्ति निकासितः ॥ ६८९ ॥ इतः परं ते बोहित्थाः-पोताः अन्येन मार्गेण नीयमानाः-प्राप्यमाणा अपि स्वयमेव किञ्चिदूने मासे कुङ्कुणतटे प्राप्ताः ॥ ६९० ॥ अथ धवलः प्रथमं उत्तीर्य प्राभृतेन-ढौकनेन विशिष्टौ युक्तौ हस्तौ यस्य स प्राभृतविहस्तः सन् यावत् राजकुलं-नृपमन्दिरं याति तावन्नरवरस्य-राज्ञः पार्श्वे श्रीपालं पश्यति ॥ ६९१ ॥

॥ ७९ ॥

रायावि सत्थवाहस्स तस्स दावेइ गुरुयबहुमाणं । तंबोलं तेणं चिय सिरिपालेणं विसेसेणं ॥६९२॥
सिरिपालकुमारेणं नाओ सिट्ठी स दिट्ठमित्तोवि । सिट्ठी पुण सिरिपालं दट्ठूणं चिंतए एवं ॥६९३॥
धिद्धी किं सो एसो सिरिपालो धवलसिट्ठिणो कालो । किंवा तेण सरिच्छो अन्नो पुरिसो इमो कोऽवि ?॥
ठाऊण खणं नरवरसहाइ जा उट्ठिओ धवलसिट्ठी । पडिहाराओ पुच्छइ थइआइत्तो इमो को उ ?॥
तेणं कहिओ सव्वोऽवि तस्स कुमरस्स चरिअवुत्तंतो । तं सोऊणं सिट्ठी जाओ वज्जाहउव्व दुही ॥६९६॥

राजाऽपि तस्मै सार्थवाहाय तेन श्रीपालेनैव विशेषेण गुरुको-महान् बहुमानो यत्र तद्गुरुकबहुमानं ताम्बूलं दापयति ॥ ६९२ ॥ श्रीपालकुमारेण स धवलश्रेष्ठी दृष्टमात्रोऽपि ज्ञात-उपलक्षितः, श्रेष्ठी पुनः श्रीपालं दृष्ट्वा एवं चिन्तयति, किं चिन्तयतीत्याह ॥ ६९३ ॥ धिग् धिगस्तु, स एष किं श्रीपालोऽस्ति, कीदृशः श्रीपालः ?-धवलश्रेष्ठिनः कालः-कालतुल्यः, किंवा तेन-श्रीपालेन सदृक्षः-तुल्योऽयं कोऽपि अन्यः पुरुषोऽस्ति ॥ ६९४ ॥ एवं चिन्तयित्वा धवलश्रेष्ठी क्षणं यावन्नरवरस्य राज्ञः सभायां स्थित्वा यावत् उत्थितस्तावद्बहिरागत्य प्रतीहारान्-द्वारपालान् पृच्छति, प्रतीहारं पृच्छतीत्यर्थः, किमित्याह-अयं 'थइयाइत्त' त्ति ताम्बूलदानाधिकारी कः पुरुषोऽस्ति ॥ ६९५ ॥ तेन प्रतीहारेण तस्य कुमारस्य सर्वोऽपि चरितवृत्तान्तः कथितः, तं वृत्तान्तं श्रुत्वा श्रेष्ठी वज्राहत इव दुःखीजातः ॥ ६९६ ॥

चिंतेइ हिययमज्झे हीही विहिविलसिएण विसमेण। जं जं करेमि कज्जं तं तं मे होइ विवरीयं ॥६९७॥
एसो सो सिरिपालो जाओ जामाउओ नरिंदस्स। गुरुओ ममावराहो किं होही तं न याणामि॥६९८॥
तहवि निअकज्जविसए धीरेण समुज्जमो न मुत्तव्वो। जं सम्ममुज्जमंताण पाणिणं संकए हु विही ॥
एवं सो चिंतंतो जा पत्तो निययंमि उत्तारे। ता तत्थ गीअनिउणं डुंबकुटुंबं च संपत्तं ॥ ७०० ॥
सो ताण गायणाणं जाव न चिंताउलो दियइ दाणं। ता डुंबेणं पुट्ठो रुट्ठो किं देव! अम्हुवरिं॥७०१॥

तदा स हृदयमध्ये चिन्तयति, हीही इतिखेदे विषमेण विधेः–दैवस्य विलासेन यत् यत् कार्यं करोमि तत्तत् मे--मम विपरीतं भवति ॥ ६९७ ॥ स एष श्रीपालो नरेन्द्रस्य--राज्ञो जामाता जातोऽस्ति, ममाऽपराधो गुरुको--महानस्ति, अथ किं भविष्यति ? तन्न जानामि ॥ ६९८ ॥ तथापि धीरेण--बुद्धिमता निजकार्यविषये सं--सम्यक् प्रकारेण उद्यमो न मोक्तव्यो--न त्याज्यो यद्–यस्मात्कारणात् सम्यक् उद्यच्छद्भ्य--उद्यमवद्भ्यः प्राणिभ्यो हु इति–निश्चितं विधिः–दैवोऽपि शङ्कते ॥६९९॥ स धवल एवं चिन्तयन् यावन्निजके–स्वकीये उत्तारे--निवेशस्थाने प्राप्तस्तावत्तत्र गीतेषु निपुणं--चतुरं गीतनिपुणं डुम्बानां कुटुम्बं च सम्प्राप्तम् ॥ ७०० ॥ स धवलश्चिन्तया आकुलः सन् यावत्तेभ्यो गायनेभ्यो दानं न ददाति तावत् डुम्बेन श्रेष्ठी पृष्टः–हे देव--हे महाराज ! अस्माकं उपरि किं रुष्टोऽसि यद्दानं न ददासीतिभावः ॥ ७०१ ॥

एगंते डुंबं पइ सो जंपइ देमि तुज्झ भूरिधणं। जइ इक्कं मह कज्जं करेसि केणावि उवाएणं॥ ७०२ ॥
डुंबोऽवि भणइ पढमं कहेह मह केरिसं तयं कज्जं। जेण मए जाणिज्जइ एयं सज्झं असज्झं वा ॥७०३॥
धवलो भणेइ जो नरवरस्स जामाउओ इमो अत्थि। जइ तं मारेसि तुमं ता तुह मुहमग्गियं देमि॥
डुंबो भणेइ तं मारणंमि इक्कुऽत्थि एरिसोवाओ। जं अन्नायकुलं तं पयडिस्सं एस डुंबुत्ति॥ ७०५॥
तत्तो राया जामाउअंपि तं जमगिहंमि पेसेहि। एवं च कए नूणं होही तुह कज्जसिद्धीवि॥७०६॥

एतद् डुम्बवचनं श्रुत्वा स श्रेष्ठी एकान्ते डुम्बं प्रति जल्पति–कथयति, तुभ्यं भूरि--प्रचुरं धनं ददामि, यदि केनापि उपायेन एकं मम कार्यं करोषि, एतद्धवलवचः श्रुत्वा ॥ ७०२ ॥ डुम्बोऽपि भणति--कथयति, प्रथमं मह्यं कथय तत्कार्यं कीदृशमस्ति, येन कथनेन मया ज्ञायते एतत्कार्यं साध्यं असाध्यं वा ॥ ७०३ ॥ तदा--धवलो भणति, योऽयं नरवरस्य–राज्ञो जामाताऽस्ति, यदि तं नृपजामातरं त्वं मारयसि तत्–तर्हि तव मुखमार्गितं ददामि--तुभ्यं दानं ददामीत्यर्थः ॥७०४॥ डुम्बो भणति, तस्य–नृपजामातुर्मारणे एक ईदृश उपायोऽस्ति, क इत्याह--यत्-यतो न ज्ञातं कुलं यस्य सोऽज्ञातकुलस्तं तथाविधं तं--नृपजामातरं एष डुंब इति प्रकटयिष्यामि ॥ ७०५ ॥ ततः–तदनन्तरं राजा तं जामातरमपि यमगृहे प्रेषयिष्यति, एवं च कृते सति नूनं–निश्चितं तव कार्यसिद्धिरपि भविष्यति ॥ ७०६ ॥

मंतेण तेण तुट्ठो धवलो अप्पेइ कोडिमुल्लंपि । नियकरमुद्दारयणं वेगेणं तस्स पाणस्स ॥ ७०७ ॥
तुट्ठो सोवि हु डुंबो सकुडुंबो जाइ निवगवक्खस्स । हिट्ठिममहीइ चिट्ठइ गायंतो गीयमइमहुरं ॥७०८॥
ताणं कोमलकंठुब्भवेण गीएण हरियमणकरणो । राया भणेइ भो भो ! जं मग्गह देमि तं तुब्भं ॥
पाणो भणेइ सामिअ ! सव्वत्थाहं लहेमि बहुदाणं । किं तु न लहेमि माणं ता तं मह देसु जइ तुट्ठो ॥
राया भणेइ माणं जस्साहं देमि तस्स तंबोलं । दावेमिमिणा जामाउएण पाणप्पिएणावि ॥७११॥

तेन मन्त्रेण--आलोचेन तुष्टः सन् धवलः कोटिमूल्यमपि निजकरस्य--स्वहस्तस्य मुद्रारत्नं वेगेन तस्मै 'पाणस्स' त्ति--डुम्बाय अर्पयति--ददाति ॥ ७०७ ॥ स डुम्बोऽपि तुष्टः सन् सकुडुम्बः--कुटुम्बसहितो याति--राजद्वारं गच्छति अति-मधुरं गीतं गायन् नृपगवाक्षस्य अधस्तनपृथिव्यां तिष्ठति ॥७०८॥ तेषां-डुम्बानां कोमलकण्ठोद्भवेन-कोमलकण्ठादुत्पन्नेन गीतेन हृते मनःकरणे--चित्तश्रोत्रेन्द्रिये यस्य स एवंविधः सन् राजा वसुपालो भणति, भो भो गायना ! यत् यूयं मार्गयध्वं--याचध्वं तत् युष्मभ्यं ददामि ॥ ७०९ ॥ तदा डुम्बो भणति, हे स्वामिन् ! अहं सर्वत्र बहुदानं लभे--प्राप्नोमि किंतु मानं--सत्कारं क्वापि न लभे--न प्राप्नोमि तत्-तस्मात्कारणात् हे महाराज ! यदि त्वं तुष्टोऽसि तर्हि मह्यं तं मानं दत्स्व--देहीत्यर्थः ॥ ७१० ॥ राजा भणति, यस्मै अहं मानं ददामि तस्मै प्राणेभ्यः प्रियः प्राणप्रियस्तेन प्राणप्रियेणापि अनेन जामात्रा ताम्बूलं दापयामि ॥ ७११ ॥

डुंबो सकुडुंबोऽवि हु पभणइ सामिअ ! महापसाओत्ति । तो रायाएसेणं कुमरो जा देइ तंबोलं ॥७१२॥
ताव सहसत्ति एगा बुड्ढी डुंबी कुमारकंठंमि । लग्गेइ धाविऊणं पुत्तय पुत्तय कओ तंसि ? ॥७१३॥
कंठविलग्गा पभणइ हा वच्छय ! कित्तियाउ कालाओ । मिलिओऽसि तुमं अम्हं कत्थ य भमिओऽसि देसंमि ॥ ७१४ ॥
सुणिओऽसि हंसदीवे पत्तो कुसलेण पवहणारूढो । तत्तो इह संपत्तो कहं कहं पुत्तय ! कहेसु ॥७१५॥
एगा भणेइ भत्तिज्जओऽसि अन्ना भणेइ भायाऽसि । अवरा कहेइ मह देवरोऽसि पुन्नेण मिलिओऽसि॥

तदा सकुडुम्बोऽपि डुम्बः प्रभणति, हे स्वामिन् ! महाप्रसाद इति-एवं प्रकर्षेण वक्तीत्यर्थः, ततो राज्ञ आदेशेन-आज्ञया कुमारः-श्रीपालो यावत्ताम्बूलं ददाति ॥ ७१२ ॥ तावत्सहसेति-तत्क्षणं एका वृद्धा डुम्बी धावित्वा कुमारस्य कण्ठे लगति, हे पुत्रक ! हे पुत्रक ! त्वमत्र कुतोऽसि-कुतः समागतोऽसि इति जल्पन्तीतिशेषः ॥ ७१३ ॥ च पुनः कण्ठे विलग्ना प्रभणति, हा इतिखेदे हे वत्स ! कियतः कालात् त्वमस्माकं मिलितोऽसि, च पुनः कुत्र देशे भ्रान्तोऽसि ? ॥७१४॥ हे पुत्र ! त्वं प्रवहणारूढः कुशलेन हंसद्वीपे प्राप्तोऽस्माभिः श्रुतोऽसि, ततः कथं कथं-केन केन प्रकारेण इह सम्प्राप्तः अस्मदग्रे कथय ॥७१५॥ एका डुम्बी भणति, मम भ्रातृव्योऽसि-भ्रातुः पुत्रोऽसि, अन्या डुम्बी भणति मम भ्राताऽसि, अपरा कथयति मम देवरोऽसि पुण्येन मिलितोऽसि ॥ ७१६ ॥

डुंबो भणेइ सामिअ! मह लहुभाया इमो गओ आसि। संपइ तुम्ह समीवे ठिओऽवि नो लक्खिओ सम्मं॥
एएण कारणेणं माणमिसेणं अणाविओ पासे। उवलक्खिओ अ सम्मं बहुलक्खणलक्खिओ एसो॥
राया चिंतेइ मणे हीही विट्टालिअं कुलं मज्झ। एएणं पावेणं तो एसो झत्ति हंतव्वो॥ ७१९ ॥
नेमित्तिओ अ बंधाविऊण आणाविओ नरवरेणं। भणिओ रे दुट्ठ! इमो मायंगो कीस नो कहिओ?॥
नेमित्तिओवि पभणइ नरवर! एसो न होइ मातंगो। किंतु महामायंगाहिवई होही न संदेहो॥

अथ डुम्बो नृपसम्मुखं विलोक्य भणति, हे स्वामिन्! अयं मम लघुभ्राता क्वापि गत आसीत्, सम्प्रति-अधुना युष्माकं समीपे स्थितोऽपि न सम्यक् उपलक्षितः॥ ७१७॥ एतेन कारणेन मानमिषेण-मानव्याजेन पार्श्वे आनायितः सम्यग् उपलक्षितश्च, हे स्वामिन्! एष मद्भ्राता बहुभिर्लक्षणैर्लक्षितो-युक्तोऽस्ति॥ ७१८॥ एतत् डुम्बवचनं श्रुत्वा राजा मनसि चिन्तयति, हीही इति खेदे एतेन पापेन दुष्टेन मम कुलं विटालितं-सदोषं कृतं, ततः-तस्मात्कारणात् एष पापो झटिति-शीघ्रं हन्तव्यो-मार्यः॥ ७१९॥ च पुनः नैमित्तिको नरवरेण-राज्ञा बन्धयित्वा आनायितः, आनाय्य च भणितः-रे दुष्ट! अयं मातङ्गो-डुम्बः कस्मान्न कथितः-कथं नोक्त इत्यर्थः॥७२०॥ नैमित्तिकोऽपि प्रभणति, हे नरवर!-हे राजन्! एष मातङ्गो न भवति, किन्तु महामातङ्गानां-महागजानां अधिपतिर्भविष्यति, अस्मिन्नर्थे सन्देहो नास्ति॥ ७२१॥



गाढयरं रुट्ठेणं रन्ना नेमित्तिओ कुमारो अ। हणणत्थं आइट्ठा निययाणं जाव सुहडाणं॥ ७२२॥
ता मयणमंजरीवि हु सुणिऊण समागया तहिं झत्ति। पभणेइ ताय! किमिअं अवियारियकज्जकरणंति?॥
आयारेणवि नज्जइ कुलंति लोएवि गिज्जए ताय!। लोओत्तर आयारो किं एसो होइ मायंगो?॥७२४॥
तो पुच्छइ नरनाहो कुमरं भो! निअकुलं पयासेसु। ईसि हसिऊण कुमरो भणइ अहो तुज्झ छेअत्तं॥
अहवा नरवर! तुमए एयं अक्खाणयं कयं सच्चं। पाऊण पाणियं किर पच्छा पुच्छिज्जए गेहं॥७२६॥

ततो गाढतरं-अत्यर्थं रुष्टेन राज्ञा नैमित्तिकः कुमारश्च निजकेभ्यः-स्वकीयेभ्यः सुभटेभ्यो यावत् हननार्थं-मारणार्थं आदिष्टौ-आज्ञप्तौ॥ ७२२॥ तावन्मदनमञ्जरी नृपपुत्री अपि एतां वार्त्तां श्रुत्वा झटिति-शीघ्रं तत्र प्रदेशे समागता, आगत्य च प्रकर्षेण भणति, हे तात!-हे पितः! किमिदं अविचारितस्य कार्यस्य करणं इति॥ ७२३॥ पुनः किं भणतीत्याह-हे तात! आचारेणापि कुलं ज्ञायते इति लोकेऽपि गीयते-कथ्यते, 'आचारः कुलमाख्याती'तिवचनात् लोकेभ्य उत्तर-उपरिवर्त्ती प्रवरो वा आचारो यस्य स एवंविध एष कुमारः किं मातङ्गः-चण्डालो भवति॥ ७२४॥ ततो नरनाथो-राजा कुमारं पृच्छति, भो कुमार! निजकुलं प्रकटीकुरु, तदा कुमार ईषत् हसित्वा भणति, अहो तव छेकत्वं-अतिनिपुणत्वं यतः पूर्वं स्वपुत्रीं दत्त्वा पश्चात्कुलं पृच्छसीतिभावः॥ ७२५॥ अथवा हे नरवर-हे राजन्! त्वया एतत् आख्यानकं-लौकिककथनं सत्यं कृतं, एतत्किमित्याह-पानीयं पीत्वा किल पश्चाद् गृहं पृच्छ्यते-कस्येदं गृहमिति॥ ७२६॥

सिन्नं करेह सज्जं जं मम हत्था कुलं पयासंति । जीहाए जं कुलवन्नणंति लज्जाकरं एयं ॥ ७२७ ॥
अहवा पवहणमज्झट्ठिआउ जा संति दुन्नि नारीओ। आणाविऊण ताओ पुच्छेह कुलंपि जइ कज्जं ॥
तो विम्हिओ अ राया आणाविअ धवलसत्थवाहंपि । पुच्छइ कहेसु किं संति पवहणे दुन्नि नारीओ? ॥
धवलोवि हु कालमुहो जा जाओ ताव नरवरिंदेणं । नारीण आणणत्थं पहाणपुरिसा समाइट्ठा ॥
तेहिं गंतूण तओ तहिं भणियाओ नरवरिंदधूयाओ। पइणो कुलकहणत्थं वच्छा! आगच्छह दुअंति ॥

यदि मम कुलश्रवणेच्छा भवेत्तर्हि एतत्कर्त्तव्यं किमित्याह—स्वकीयं सैन्यं—कटकं सज्जं कुरु यन्मम हस्तौ कुलं प्रकाशयतः, यत्स्वजिह्वया कुलवर्णनं तदेतत् लज्जाकरमिति ॥ ७२७ ॥ अथवा प्रवहणस्य—पोतस्य मध्ये स्थिते ये द्वे नार्यौ—स्त्रियौ स्तः ते स्त्रियौ इह आनाय्य यदि युष्माकं कार्यं तर्हि कुलमपि पृच्छत ॥ ७२८ ॥ ततश्च राजा विस्मितः सन् धवलसार्थवाहमपि आनाय्य पृच्छति, हे श्रेष्ठिन्! कथय किं प्रवहणे द्वे नार्यौ स्तः? ॥ ७२९ ॥ एतन्नृपवचः श्रुत्वा धवलोऽपि यावत् कालं—श्यामं मुखं यस्य स कालमुखो जातस्तावन्नरवरेन्द्रेण—राज्ञा नार्योरानयनार्थं प्रधानपुरुषाः समादिष्टा—आज्ञप्ताः ॥ ७३० ॥ तैः—प्रधानपुरुषैस्तत्र गत्वा ते—नरवरेन्द्रपुत्र्यौ इति—वक्ष्यमाणप्रकारेण उक्ते, इतीति किं? तदाह—हे वत्से! युवां स्वपत्युः कुलकथनार्थं द्रुतं—शीघ्रं आगच्छतम् ॥ ७३१ ॥

तं सोऊणं ताओ मयणाओ हरिसियाओ चित्तंमि । तेणं मणवल्लहेणं नूणं आणाविया अम्हे॥७३२॥
सिबिआए चडिआओ संपत्ता नरवरिंदभवणंमि । दट्ठूण पाणनाहं जाया हरिसेण पडिहत्था ॥७३३॥
रन्नावि पुच्छियाओ वच्छा! भंजेह अम्ह संदेहं । को एसो वुत्तंतो? कहेह आमूलचूलंति ॥७३४॥
तो विज्जाहरधूया कहेइ सव्वंपि कुमरचरिअं जा । ताव निवो साणंदो भणइ इमो भइणिपुत्तो मे ॥
गाढयरं संतुट्ठो राया कुमरस्स देइ बहुमाणं । डुंबं सकुडुंबंपि हु ताडावइ गरुअरोसेण ॥ ७३६ ॥

तद्वचनं श्रुत्वा ते मदने चित्ते हर्षिते, कथं हर्षिते इत्याह—नूनं—निश्चितं तेन मनोवल्लभेन—भर्त्रा आवां आनायिते—आकारिते स्वः, इत्थं हर्षिते इत्यर्थः ॥ ७३२ ॥ ततः शिबिकायां—सुखासने चटिते—आरूढे द्वे अपि स्त्रियौ नरवरेन्द्रस्य—राजेन्द्रस्य वसुपालस्य भवने—मन्दिरे प्राप्ते, तत्र च प्राणनाथं—भर्त्तारं दृष्ट्वा हर्षेण—आनन्देन प्रतिहस्ते—परिपूर्णे व्याप्ते इतियावत् जाते ॥ ७३३ ॥ राज्ञापि इति—अमुना प्रकारेण पृष्टे—हे वत्से—हे पुत्र्यौ! युवां अस्माकं सन्देहं—संशयं भङ्क्तं—दूरीकुरुतं, एष को वृत्तान्तः—एषा का वार्ताऽस्ति? आमूलचूलं कथयतं—मूलादारभ्य चूलां यावद्वदतमित्यर्थः ॥ ७३४ ॥ ततः—तदनन्तरं विद्याधर-राजस्य पुत्री यावत्सर्वमपि कुमारस्य चरितं कथयति तावन्नृपो—वसुपालो राजा सानन्दो—हर्षसहितः सन् भणति, अयं कुमारो मम भगिनीपुत्रो, भागिनेयोऽस्तीत्यर्थः ॥ ७३५ ॥ ततो गाढतरं—अत्यन्तं सन्तुष्टो राजा कुमाराय बहुमानं ददाति, हु निपातोऽत्र पुनरर्थे, पुनर्गुरुकरोषेण—तीव्रक्रोधेन सकुटुम्बं—कुटुम्बसहितमपि डुम्बं ताडयति—भृत्यैः कुट्टयति ॥ ७३६ ॥

डुंबो कहेइ सच्चं सामिअ ! कारावियं इमं सव्वं । एएण सत्थवाहेण देव ! दाऊण मज्झ धणं ॥७३७॥
तो राया धवलंपिहु बंधावेऊण निविडबंधेहिं । अप्पेइ मारणत्थं चंडाणं दंडपासीणं ॥ ७३८ ॥
कुमरो निरुवमकरुणारसवसओ नरवराउ कहकहवि । मोआवइ तं धवलं डुंबं च कुडुंबसंजुत्तं ॥
मायंगाहिवइत्तं पुट्ठो नेमित्तिओ कहइ एवं । मायंगा नाम गया तेसिं एसो अहिवइत्ति ॥ ७४० ॥
संपूइऊण राया सम्मं नेमित्तिअं विसज्जेइ । भयणीसुयंति धूयावरंति कुमरं च खामेइ ॥ ७४१ ॥

तदा डुम्बः सत्यं कथयति, हे स्वामिन् !–हे देव–हे महाराज एतेन सार्थवाहेन मह्यं धनं–द्रव्यं दत्वा एतत्सर्वमकृत्यं ( कारापितं, अतः ) कारणमयमेवास्तीति भावः ॥ ७३७ ॥ ततो राजा धवलसार्थवाहमपि निविडबन्धैः–घनबन्धैर्बन्धयित्वा चण्डेभ्यः–अतिदुष्टेभ्यो दण्डपाशिकेभ्यः–कोट्टपालपुरुषेभ्यो मारणार्थं अर्पयति--ददाति ॥ ७३८ ॥ कुमारः–श्रीपालो निरुपम–उपमारहितो यः करुणारसस्तद्वशात् तं धवलं कथं कथमपि नरवरात्--नृपान्मोचयति, च पुनः कुटुम्बेन संयुक्तं–सहितं डुम्बं मोचयति ॥ ७३९ ॥ ततो राज्ञा मातङ्गाधिपतित्वं पृष्टो नैमित्तिक एवं कथयति, हे राजन् ! मातङ्गा नाम गजा–हस्तिनस्तेषां एष कुमारोऽधिपतिः–स्वामी इति ॥ ७४० ॥ राजा–वसुपालो नैमित्तिकं सम्यक् वस्त्राभरणादिभिः सत्कार्य विसर्जयति, च पुनः कुमारं भगिन्याः सुतं इति हेतोः पुत्र्या वरं–भर्त्तारं इतिहेतोः क्षमयति ॥ ७४१ ॥



राया भणेइ पिच्छह अहह अहो उत्तमाण नीयाणं । केरिसमंतरमेयं अमिअविसाणं व संजायं ?॥
धवलो करेइ एरिसमणत्थमुवगारिणोऽवि कुमरस्स । कुमरो एयस्स अणत्थकारिणो कुणइ उवयारं ॥
जह जह कुमरस्स जसं धवलं लोअंमि वित्थरइ एवं । तह तह सो धवलोऽविहु खणे खणे होइ कालमुहो॥
तहवि कुमारेणं सो आणीओ नियगिहं सबहुमाणं । भुंजाविओ अ विस्सामिओ अ नियचंदसालाए॥
तत्थ ठिओ सो चिंतइ अहह अहो केरिसो विही वंको ?। जमहं करेमि कज्जं तं तं मे निप्फलं होइ ॥

राजा भणति, अहहेति खेदे अहो इति आश्चर्ये भो लोका ! यूयं प्रेक्षध्वं–विलोकयत, उत्तमानां–उत्तमपुरुषाणां नीचानां–नीचपुरुषाणां एतत् कीदृशं अन्तरं सञ्जातं ?, कयोरिव–अमृतविषयोरिव–यथा सुधाविषयोरन्तरं तथेत्यर्थः ॥ ७४२ ॥ धवलः श्रेष्ठी उपकारिणोऽपि कुमारस्य ईदृशं अनर्थं करोति, कुमारः अनर्थकारिणोऽपि एतस्य धवलस्य उपकारं करोति ॥ ७४३ ॥ यथा यथा कुमारस्य धवलं–उज्ज्वलं यशो लोके एवमुक्तप्रकारेण विस्तृणाति–विस्तारं प्राप्नोति तथा तथा हु इति निश्चितं स नाम्ना धवलोऽपि क्षणे क्षणे कालमुखः–श्याममुखो भवति ॥ ७४४ ॥ तथापि कुमारेण स धवलः सबहुमानं–बहुमानसहितं यथा स्यात्तथा निजगृहं आनीतो विविधभोज्यैः भोजितश्च, ततश्चन्द्रशालायां–स्वगृहोपरिभूमौ विश्रामितश्च–विश्रामं कारितः ॥ ७४५ ॥ तत्र–चन्द्रशालायां स्थितः स धवलश्चिन्तयति, किमित्याह–अहह इति खेदे अहो इति आश्चर्ये विधिः–दैवः कीदृशो वक्रो वर्त्ततेऽहं यत् यत् कार्यं करोमि तत्तन्मम निष्फलं भवति ॥ ७४६ ॥

एवं ठिएवि अजवि मारिज्जइ जइ इमो मए कहवि । ता एयाओ सिरीओ सव्वाओ हुंति मह चेव ॥
अन्नं च इत्थ सत्तमभूमीए सुत्तओ इमो इक्को । ता हणिऊणं एयं रमणीवि बलावि माणेमि ॥ ७४८ ॥
इअ चिंतिऊण हिट्ठो धिट्ठो दुट्ठो निकिट्ठपाविट्ठो । असिधेणुं गहिऊणं पहाविओ कुमरवहणत्थं ॥
उम्मग्गमुक्कपाओ पडिओ सो सत्तमाउ भूमीओ । छुरिआइ उरे विद्धो मुक्को पाणेहिं पावुत्ति॥ ७५० ॥
सो सत्तमभूमीओ पडिओ पत्तो अ सत्तमिं भूमिं । नरयस्स तारिसाणं समत्थि ठाणं किमन्नत्थ ? ॥

एवं स्थितेऽपि यदि अयं कुमारो मयाऽद्यापि कथमपि-केनापि प्रकारेण मार्य्यते-प्राणवियुक्तः क्रियते तत्-तर्हि एताः सर्वाः श्रियो-लक्ष्म्यो ममैव भवन्ति ॥ ७४७ ॥ अन्यच्च-अत्र-सप्तमभूमौ अयं कुमार एक-एकाकी सुप्तोऽस्ति, तत्-तस्मात्कारणात् एतं कुमारं हत्वा एतस्य तिस्रो रमणीरपि-स्त्रियोऽपि बलादपि मानयामि-भुनज्मि ॥ ७४८ ॥ इति चिन्तयित्वा स धवलो हृष्टः सन् असिधेनुं-छुरिकां गृहीत्वा कुमारस्य वधार्थं प्रधावितो-हननार्थं चलितः, कीदृशः सः ?-धृष्टः पुनर्दुष्टोऽत एव निकृष्ट-अधमः पुनरतिशयेन पाप इति पापिष्टः ॥ ७४९ ॥ भयत्वरादिवशात् उन्मार्ग्गे मुक्तौ पादौ येन स उन्मार्ग्गमुक्तपादः सन् सप्तम्या भूमितः पतितः स्वकरस्थया छुरिकया उरसि-हृदये विद्धः पापोऽयमितिकृत्वा प्राणैर्मुक्तः-त्यक्तः ॥ ७५० ॥ स धवलः सप्तमभूमितः पतितो नरकस्य सप्तमीं भूमिं-सप्तमनरकपृथ्वीमित्यर्थः प्राप्तश्च, युक्तोऽयमर्थः यतस्तादृशानां दुष्टानां सप्तमनरकादन्यत्र किं स्थानं समस्ति ?, नास्त्येवेत्यर्थः ॥ ७५१ ॥

तं दट्ठूण पभाए लोओ चिंतइ इमाइ चिट्ठाए । कुमरहणणत्थमेसो नज्जइ आहाविओ नूणं ॥७५२॥
अहह अहो अहमत्तं एयस्स कुबेरसिट्ठिणो नूणं । जो उवयारिक्कपरे कुमरेऽवि करेइ वहबुद्धिं॥७५३॥
एएणं पावेणं जो दोहो चिंतिओ कुमारस्स । सो एअस्सवि पडिओ अहो महप्पाण माहप्पं॥७५४॥
कुमरोऽवि हु तच्चरिअं चिंतंतो सोइऊण खणमिक्कं । काऊण पेअकिच्चं दावेइ जलंजलिं तस्स ॥
वरबुद्धिदाइणो जे मित्ता धवलस्स आसि तिन्नेव । ते सव्वाइ सिरीए कुमरेणऽहिगारिणो ठविआ ॥

प्रभाते लोकः स्वहस्तछुरिकया मृतं तं धवलं दृष्ट्वा चिन्तयति, किमित्याह-नूनं-निश्चयेन अनया चेष्टया एष धवलः कुमारस्य हननार्थं आधावितो ज्ञायते ॥ ७५२ ॥ पुनः किं चिन्तयतीत्याह-अहहेति खेदे अहो इति आश्चर्ये एतस्य कुबेरश्रेष्ठिनोऽधमत्वं आश्चर्यकार्यकारीत्यर्थः, नूनं-निश्चितं उपकारैकपरे-उपकारकरणतत्परेऽपि कुमारे यो दुष्टो वधबुद्धिं-मारणबुद्धिं करोति ॥ ७५३ ॥ एतेन पापेन-क्रूरेण धवलेन यः कुमारस्य द्रोहश्चिन्तितः स एतस्यैव पतितः, अत्र अपिशब्द एवकारार्थेऽव्ययानामनेकार्थत्वात्, अहो महात्मनां-महापुरुषाणां माहात्म्यं आश्चर्यकारीत्यर्थः ॥ ७५४ ॥ कुमारोऽपि च तस्य धवलस्य चरितं-आचारं चिन्तयन् एकं क्षणं यावत् शोचित्वा तस्य प्रेतक्रियां-मृतककर्तव्यं वह्निदानादिकं कृत्वा तस्मै जलस्याञ्जलिं दापयति ॥ ७५५ ॥ वरबुद्धिदायीनि-प्रधानबुद्धिदायकानि यानि धवलस्य त्रीणि मित्राणि आसन् तान्येव कुमारेण सर्वस्या धवलसम्बन्धिन्याः श्रियो-लक्ष्म्या अधिकारीणि स्थापितानि ॥ ७५६ ॥

मयणातिगेण सहिओ कुमरो तत्थ ट्ठिओ समाहीए । केवलसुहाइं भुंजइ मुणिव्व गुत्तित्तयसमेओ ॥
अन्नदिणे सो कुमरो रयवाडीए गओ सपरिवारो । पिच्छइ एगं सत्थं उत्तरियं नयरउज्जाणे ॥७५८॥
जो तत्थ सत्थवाहो सोवि हु कुमरं समागयं दट्ठुं । घित्तूण भिट्टणाइं पणमइ पाए कुमारस्स ॥
कुमरेण पुच्छिओ सो सत्थाहिव! आगओ तुमं कत्तो? । पुरओवि कत्थ गच्छसि किं कत्थवि दिट्ठमच्छरियं?॥ ७६० ॥
तो भणइ सत्थवाहो कंतीनयरीओ आगओ अहयं । गच्छामि कंबुदीवं निसुणसु अच्छेरयं एयं ॥

मदनात्रिकेण–तिसृभिर्मदनास्त्रीभिःसहितः कुमारस्तत्र पुरे समाधिना–चित्तैकाग्र्येण स्थितः सन् केवलसुखानि–समस्तसुखानि भुनक्ति, क इव ?–गुप्तित्रयेण मनोवाक्कायगुप्तिरूपेण समेतो–युक्तो मुनिरिव, यथा स मुनिः सर्वसुखानि भुनक्ति तथाऽयमपि इत्यर्थः 'केवलश्चैककृत्स्नयो'रितिहैमः ॥ ७५७ ॥ अन्यस्मिन् दिने सपरिवारः–परिवारसहितः कुमारो राजवाटिकायां गतः सन् नगरस्योद्याने उत्तीर्णं एकं सार्थं प्रेक्षते–पश्यति ॥ ७५८ ॥ यस्तत्र सार्थवाहः सोऽपि कुमारं समागतं दृष्ट्वा प्राभृतानि गृहीत्वा कुमारस्य पादौ प्रणमति ॥ ७५६ ॥ कुमारेण स पृष्टः–हे सार्थाधिप–हे सार्थपते ! त्वं कुतः स्थानात् आगतोऽसि ? पुरतः–अग्रतोऽपि कुत्र गच्छसि ? किं कुत्रापि आश्चर्यं दृष्टं ? दृष्टं चेत्कथयेतिभावः ॥ ७६० ॥ ततः सार्थवाहो भणति–अहं कान्तीनगरीतः आगतोऽस्मि, कम्बुद्वीपं गच्छामि, एतद्–अनन्तरं वक्ष्यमाणं आश्चर्यं शृणु ॥ ७६१ ॥

इत्तो य जोयणसए कुंडलनयरं समत्थि विक्खायं । तत्थऽत्थि गुरुपयावो राया सिरिमगरकेउत्ति ॥
तस्स कप्पूरतिलया देवी कप्पूरविमलसीलगुणा । तक्कुच्छिभवा सुंदरपुरंदरक्खा दुवे पुत्ता ॥७६३॥
ताण उवरिं च एगा पुत्ती गुणसुंदरित्ति नामेणं । जा रूवेणं रंभा बंभी अ कलाकलावेणं॥७६४॥
तीए कया पइन्ना जो मं वीणाकलाइ निज्जिणइ। सो चेव मज्झ भत्ता अन्नेहिं न किंपि मह कज्जं ॥
तं सोऊणं पत्ता तत्थ नरिंदाण नंदणाऽणेगे । वीणाए अब्भासं कुणमाणा संति पइदिवसं ॥७६६॥

इतश्च–अस्मान्नगरात् योजनशते विख्यातं–प्रसिद्धं कुण्डलपुरनामकं नगरं–समस्ति, तत्र गुरुः–महान् प्रतापो यस्य स गुरुप्रतापः श्रीमकरकेतुरिति नाम्ना राजाऽस्ति ॥ ७६२ ॥ तस्य राज्ञः कर्पूरतिलकानाम देवी–राज्ञी अस्ति, कीदृशी ?–कर्पूरवद्विमलो निर्मलः शीलगुणो यस्याः सा कर्पूर० तस्याः कुक्षौ भव–उत्पत्तिर्ययोस्तौ तत्कुक्षिभवौ सुन्दरपुरन्दराख्यौ–सुन्दरपुरन्दरनामानौ द्वौ पुत्रौ स्तः ॥ ७६३ ॥ तयोः पुत्रयोरुपरि च एका गुणसुन्दरीति नाम्ना पुत्री अस्ति, या पुत्री रूपेण–लावण्येन सौन्दर्येणेत्यर्थः रम्भा– रम्भादेवाङ्गनातुल्या वर्त्तते, च पुनः कलाकलापेन–कलानां समूहेन ब्राह्मी-सरस्वती तुल्याऽस्ति ॥ ७६४ ॥ तया प्रतिज्ञा कृताऽस्ति, कीदृशीत्याह–यः पुमान् वीणाकलया–वीणावादनचातुर्य्येण मां निर्जयति–निःशेषेण जयति, स एव मम भर्त्ता, अन्यैः पुरुषैर्मम किमपि कार्यं–प्रयोजनं नास्ति ॥७६५॥ तत् श्रुत्वा तन्नगरे अनेके–बहवो नरेन्द्राणां–राज्ञां नन्दनाः–पुत्रा प्राप्ताः, प्रतिदिवसं–प्रत्यहं वीणाया अभ्यासं कुर्वाणाः सन्ति ॥ ७६६ ॥

मासे मासे तेसिं होइ परिक्खा परं न केणावि । सा वीणाए जिप्पइ पच्चक्खसरस्सईतुल्ला ॥७६७॥
एगपरिक्खादिवसे दिट्ठा सा तत्थ देव ! अम्हेहिं । रमणीण सिरोरयणं सा पुरिसाणं तुमं देव ! ॥
अघडंतोवि हु जइ कहावि होइ दुण्हंपि तुम्ह संयोगो । ता देव! पयावइणो एस पयासो हवइ सहलो॥
तं सोऊणं कुमरो सत्थाहिवइं पसत्थवत्थेहिं । पहिराविऊण संझासमये पत्तो नियावासं ॥ ७७० ॥
चिंतेइ तओ कुमरो कह पिक्खिस्सं कुऊहलं एयं ? । अहवा नवपयझाणं इत्थ पमाणं किमन्नेणं?॥

मासे मासे तेषां राजकुमाराणां परीक्षा भवति परं केनापि राजपुत्रेण सा कन्या वीणायां न जीयते, कीदृशी सा ?—प्रत्यक्षेण-साक्षात्सरस्वत्या तुल्या-सदृशी ॥ ७६७ ॥ एकस्मिन् परीक्षादिवसे तत्र सा राजपुत्री हे देव—हे राजन् ! अस्माभिर्दृष्टा, परमस्माभिरेवं ज्ञायते—हे देव! रमणीनां—स्त्रीणां सर्वासामपि शिरोरत्नं—शिरोमणिः सा कन्याऽस्ति, पुरुषाणां सर्वेषामपि शिरोरत्नं त्वमसि ॥ ७६८ ॥ यद्यपि अघटमानोऽपि—असम्भवन्नपि भवतोर्द्वयोरपि संयोगः—सम्बन्धः कथमपि भवति तत्—तर्हि हे देव ! प्रजापतेः—विधातुः एष भवद्द्वयनिर्माणरूपः प्रयासः सफलो भवति ॥७६९॥ तत्पूर्वोक्तं श्रुत्वा कुमारः सार्थाधिपतिं प्रशस्तवस्त्रैः परिधाप्य सन्ध्यासमये निजावासं—निजमन्दिरं प्राप्तः ॥ ७७० ॥ ततः कुमारश्चिन्तयति—एतत्कुतूहलं—कौतुकं कथं प्रेक्षिष्ये—विलोकयिष्यामि? अथवा अत्र—अस्मिन् कार्ये नवपदानां—अर्हदादीनां ध्यानं प्रमाणमस्ति, अन्येन विमर्शेन ( किं ?, न ) किञ्चिदित्यर्थः ॥ ७७१ ॥

इअ चिंतिऊण सम्मं नवपयझाणं मणंमि ठावित्ता । तह झाइउं पवत्तो कुमरो जह तक्खणा चेव ॥
सोहम्मकप्पवासी देवो विमलेसरो समणुपत्तो । करकलिउत्तमहारो कुमरं पइ जंपए एवं ॥७७३॥
इच्छाकृतिर्व्योमगतिः कलासु, प्रौढिर्जयः सर्वविषापहारः । कण्ठस्थिते यत्र भवत्यवश्यं,
कुमार ! हारं तममुं गृहाण ॥ ७७४ ॥

इति चिन्तयित्वा सम्यक् नवपदध्यानं मनसि स्थापयित्वा कुमारः श्रीपालस्तथा—तेन प्रकारेण ध्यातुं प्रवृत्तो—यथा तत्क्षणादेव—तत्कालमेव ॥७७२॥ सौधर्मकल्पवासी—सौधर्माख्यदेवलोकनिवासी विमलेश्वरो नाम देवः समनुप्राप्तः, तत्र सम्प्राप्तः सन् कुमारं प्रति एवं—वक्ष्यमाणप्रकारेण जल्पति—वक्ति, कीदृशो देवः ?—करे—हस्ते कलितः—प्राप्तः उत्तमः—प्रधानो हारो यस्य स-एवंविधः ॥ ७७३ ॥ एवं कथमित्याह—हे कुमार ! त्वं अमुं हारं गृहाण, तं कं इत्याह—यत्र—यस्मिन् हारे कण्ठे स्थिते सति अवश्यं—निश्चयेन एतानि पञ्च कार्याणि भवन्ति, तथाहि—इच्छया आकृतिः इच्छाकृतिः, यादृशी इच्छा भवेत् तादृशो देहाकारो भवेत् १ तथा व्योम्नि—आकाशे गतिः—गमनं—व्योमगतिः २ तथा कलासु सर्वास्वपि प्रौढिः—प्रागल्भ्यं निपुणत्वमितियावत् ३ तथा जयः—शत्रूणां पराजयप्रापणम् ४ तथा सर्वेषां विषाणामपहारः—अपहरणं सर्वविषापहारः ५ ॥ ७७४ ॥

॥ ८७ ॥

एवं वदन्नेव स सिद्धचक्रा-धिष्ठायकः श्रीविमलेशदेवः । कुमारकण्ठे विनिवेश्य हारं, जगाम धामाद्भुतमात्मधाम ॥ ७७५ ॥

तं लध्धूण कुमारो निच्चिंतो सुत्तओ अह पभाए । उट्ठंतोऽवि हु कुंडलपुरगमणं निअमणे कुणइ ॥
हारपभावेणं कयवामणरूवो गओ पुरे तत्थ । पासइ वीणाहत्थे रायकुमारे ससिंगारे ॥ ७७७ ॥
कुमरो वामणरूवो रायकुमारेहिं सह गओ तत्थ । जत्थऽत्थि उवज्झाओ वीणासत्थाइं पाढंतो॥७७८॥
जह जह उवझायं पइ वामणओ कहइ मंऽपि पाढेह । तह तह रायकुमारा हसंति सव्वे हडहडत्ति॥

स सिद्धचक्रस्याधिष्ठायकः श्रीविमलेशदेवो–विमलेश्वरनामा सुरः एवम्–उक्तप्रकारेण वदन्–ब्रुवन् एव कुमारस्य कण्ठे हारं विनिवेश्य–स्थापयित्वा आत्मनः–स्वस्य धाम–गृहं स्वर्गमित्यर्थः जगाम–गतवान्, कीदृशमात्मधाम ?–धाम्ना–तेजसाऽद्भुतं धामाद्भुतम् ॥ ७७५ ॥ कुमारस्तं हारं लब्ध्वा–प्राप्य निश्चिन्तः–चिन्तारहितः सुप्तः, अथ प्रभाते उत्तिष्ठन्नेव निजमनसि–स्वचित्ते कुण्डलपुरगमनं करोति ॥ ७७६ ॥ हारप्रभावेण कृतं वामनरूपं येन स एवंविधः कुमारस्तत्र पुरे गतः सन् वीणा हस्तेषु येषां ते वीणाहस्तास्तान् पुनः सह शृङ्गारेण वर्त्तन्ते इति सशृङ्गारास्तान् राजकुमारान् पश्यति ॥७७७॥ कुमारो वामनरूपः सन् अन्यै राजकुमारैः सह तत्र गतः यत्र वीणाशास्त्राणि पाठयन् उपाध्यायोऽस्ति ॥ ७७८ ॥ अथ वामनको यथा यथा उपाध्यायं प्रति कथयति, किमित्याह–मामपि पाठयतेति, तथा तथा सर्वे राजकुमारा हडहड इति हसन्ति ॥७७९॥

दट्ठुं अपाढयंतं उवझायं झत्ति तस्स वामणओ । अप्पेइ हत्थखग्गं हेलाए अइमहग्घंपि ॥ ७८० ॥
तो उवझाओ तं आयरेण पुरओ निवेसइत्ताणं । अप्पेइ सिक्खणत्थं निअवीणं तस्स हत्थंमि ॥
वामणओ तं वीणं विवरीयत्तेण पाणिणा लिंतो । तंतिं वा तोडंतो फोडंतो तुंबयं वावि ॥ ७८२ ॥
सव्वेसिं कुमाराणं हासरसं चेव वड्ढयंतोवि । केवलदाणबलेणं अग्घइ उवझायपासंमि ॥ ७८३ ॥
सोऽवि परिक्खासमए रक्खिज्जंतोवि तेहिं सव्वेहिं । कुंडलदाणवसेणं कुमरिसहाए गओ झत्ति ॥

तदा वामनक उपाध्यायं अपाठयन्तं दृष्ट्वाऽतिमहार्घमपि–बहुमूल्यमपि हस्तखड्गं–स्वहस्तकरवालं हेलया–लीलामात्रेण झटिति–शीघ्रं तस्मै उपाध्याय अर्प्पयति–ददाति ॥ ७८० ॥ ततः–तदनन्तरं उपाध्यायस्तं वामनकं आदरेण पुरतः–अग्रतो निवेश्य–स्थापयित्वा शिक्षणार्थं तस्य–वामनस्य हस्ते निजवीणां–स्वकीयविपञ्चीं तस्मै–वामनाय अर्पयति ॥ ७८१ ॥ वामनकस्तां वीणां पाणिना–हस्तेन विपरीतत्वेन विपरीततया गृह्णन् चः पुनः तन्त्रीं त्रोटयन् तुम्बकं वापि स्फोटयन् ॥ ७८२ ॥ सर्वेषां कुमाराणां हास्यरसमेव वर्द्धयन्नपि केवलं दानस्य बलेन उपाध्यायस्य पार्श्वे अर्घ्यः–पूजार्हः स इवाचरति अर्घयति–आदरयोग्यो भवतीत्यर्थः ॥ ७८३ ॥ स वामनकोऽपि परीक्षायाः समये–अवसरे तैः सर्वैर्लोकैरन्तः प्रविशन् रक्ष्यमाणोऽपि–वार्यमाणोऽपि कुण्डलदानवशेन झटिति–शीघ्रं कुमार्याः सभायां गतः ॥ ७८४ ॥

तं कयइच्छारूवं कुमरी पासेइ निरुवमसरूवं । अन्ने वामणरूवं पासंति निवाइणो सव्वे ॥७८५॥
चिंतइ मणे कुमारी मज्झ पइन्ना इमेण जइ पुन्ना । ताऽहं पुन्नपइन्ना अप्पं मन्नेमि कयपुन्नं ॥७८६॥
॥ ८६ ॥ जइ पुण मज्झ पइन्ना इमिणावि ण पूरिया अहन्नाए । ताहं विहिअपइन्ना सवेरिणी चेव संजाया ॥
उवज्झायाएसेणं तेहिं कुमारेहिं दंसियं जाव । वीणाए कुसलत्तं ताव कुमारीवि दंसेइ ॥ ७८८ ॥
तीए कुमरिकलाए संकुडियं सयलरायकुमराणं । वीणाए कुसलत्तं चंदकलाइ व्व कमलवणं ॥७८९॥

कृतं इच्छया रूपं येन स कृतेच्छारूपस्तं तादृशं तं कुमारं कुमारी–नृपकन्या निरुपमं–उपमारहितं स्वरूपं यस्य स तं तथोक्तं पश्यति, अन्ये नृपादयः सर्वेऽपि लोका वामनरूपं पश्यति ॥ ७८५ ॥ तदा कुमारी मनसि चिन्तयति, यदि अनेन राजकुमारेण मम प्रतिज्ञा पूर्णा–पूरिता तत्–तदाऽहं आत्मानं कृतपुण्यं मन्ये–जानामि कृतं पुण्यं येन स तं, कीदृशी अहं ?–पूर्णा प्रतिज्ञा यस्याः सा पूर्णप्रतिज्ञा ॥ ७८६ ॥ यदि पुनरनेन पुरुषेणापि अधन्याया–अपुण्यवत्या मम प्रतिज्ञा न पूरिता तत्–तर्हि विहिता–कृता प्रतिज्ञा यया सा ईदृशी अहं स्ववैरिणी एव सञ्जाता ॥ ७८७ ॥ तत उपाध्यायस्यादेशेन–आज्ञया तैः कुमारैर्यावद्वीणायां–वीणावादने कुशलत्वं–निपुणत्वं दर्शितं तावत्कुमारी अपि दर्शयति, निजवीणावादनविज्ञानमिति शेषः ॥ ७८८ ॥ तया कुमार्याः कलया सकलराजकुमाराणां वीणावादने कुशलत्वं सङ्कुचितं–मुद्रितमित्यर्थः, कया किमिव ?–चन्द्रकलया कमलवनमिव, यथा तया तत्सङ्कुचति तथेत्यर्थः ॥ ७८९ ॥ ॥ ८६ ॥

तं च कुमारीइ कलं सयलोवि जणो पसंसए जाव । ताव कुमारो वामणरूवधरो वज्जरइ एवं ॥
अहो सुजाणो कुंडल–पुरलोओ केरिसो इमो सव्वो । तो संकिआ कुमारी उवहसिउं मन्नए अप्पं ॥
अप्पेइ नियं वीणं तस्स कुमारस्स रायधूयावि । कुमरोवि सारिऊणं तं च असुद्धं कहइ एवं॥७९२॥
तंती सगब्भरूवा गलगहियं तुंबयं च एयाए । दंडोऽवि अग्गिदड्ढो तेण असुद्धा मए कहिया ॥
ते दंसिऊण सम्मं आसारेऊण वायए जाव । ताव पसुत्तुव्व जणो सव्वोवि अचेयणो जाओ ॥

यावच्च तां–कुमार्याः कलां सकलोऽपि लोकः प्रशंसति–श्लाघते तावद्वामनरूपधरः कुमारः श्रीपाल एवं–वक्ष्यमाणप्रकारेण 'वज्जरइ' इति ब्रूते ॥ ७९० ॥ कथमित्याह–अहो इति अलीकप्रशंसायां अयं सर्वोऽपि कुण्डलपुरलोकः कीदृशः सुज्ञानोऽस्ति ?, अज्ञानवानितिभावः, तत एतत्कुमारवचनश्रवणानन्तरं कुमारी शङ्किता सती आत्मानं उपहसितं मन्यते–कुमारेणाहं उपहसितेति जानातीत्यर्थः ॥ ७९१ ॥ तदा राजकन्यापि तस्मै कुमाराय निजां–स्वकीयां वीणां अर्पयति, कुमारोऽपि च तां वीणां सारयित्वा एवं–वक्ष्यमाणप्रकारेण अशुद्धां कथयति ॥ ७९२ ॥ कथमित्याह–एतस्या वीणायास्तन्त्री सगर्भ रूपं यस्याः सा सगर्भरूपा स्फुटितेत्यर्थः अस्तीति शेषः च पुनस्तुम्बकं गले गृहीतं–लग्नमस्ति, एतस्या दण्डोऽपि अग्निना दग्धोऽस्ति, तेन कारणेन मया इयं वीणाऽशुद्धा कथिता ॥ ७९३ ॥ तान् म(त)न्त्र्यादिदोषान् दर्शयित्वा सम्यक् आसार्य–सारयित्वा यावत्कुमारो वीणां वादयति तावत्प्रकर्षेण सुप्त इव सर्वोऽपि जनो–लोकोऽचेतनो जातः ॥ ७९४ ॥

कस्सवि मुद्दारयणं कस्सवि कडयं च कुंडलं मउलं । कस्सावि उत्तरीयं गहिऊण कओ अ उक्करडो ॥
अह जग्गियंमि लोए अच्छरिअं पासिऊण सा कुमरी । धन्ना पुन्नपइन्ना वरइ कुमारं तिजयसारं ॥
रायाईओ अ जणो जा चिंतइ वामणो हहा वरिओ । ताव कुमारो दंसइ सहावरूवं नियं झत्ति ॥
आणंदिओ अ राया परिणावेऊण तेण निअधूयं । दावेइ हयगयाई धणकंचणपूरियं भवणं ॥७९८॥
तत्थ ठिओ सिरिपालो पुन्नविसालो महाभुयालो अ । गुणसुंदरीसमेओ निच्चंपि करेइ लीलाओ ॥

तदा कुमारेण कस्यापि मुद्रारत्नं कस्यापि कटकं-वलयं च पुनः कस्यापि ( कुण्डलं कस्यापि ) मुकुटं कस्यापि उत्तरीयं-वस्त्रं गृहीत्वा उक्करडोत्ति-उत्करः-पुञ्जः कृतः ॥ ७९५ ॥ अथ-अनन्तरं लोके जागृते सती सा कुमारी एतदाश्चर्यं दृष्ट्वा त्रिजगति-त्रिभुवने सारं कुमारं श्रीपालं वृणीते, कीदृशी कुमारी ?-धन्या पुनः पूर्णा प्रतिज्ञा यस्याः सा पूर्णप्रतिज्ञा ॥७९६॥ राजादिकश्च जनो-लोको हहा इति खेदे वामनो वृत इति यावच्चिन्तयति तावत् श्रीपालकुमारो झटिति-शीघ्रं निजं-स्वकीयं स्वभावरूपं दर्शयति ॥ ७९७ ॥ तदा राजा आनन्दितो-हर्षितः सन् तेनेति तं कुमारं निजपुत्रीं परिणाय्य हयगजादिकं दापयति, पुनः धनकाञ्चनपूरितं भवनं-मन्दिरं दापयति । ७९८ ॥ तत्र भवने स्थितश्च श्रीपालः कुमारो गुणसुन्दर्या स्वपत्न्या समेतः-संयुक्तो नित्यमपि लीलाः-क्रीडाः करोति, कीदृशः श्रीपालः ?-पुण्यं विशालं-विस्तीर्णं यस्य स पुण्यविशालः, प्राकृतत्वाद्विशेष्यस्य पूर्वनिपातः, पुनर्महाभुजालः-प्रचण्डभुजदण्ड इत्यर्थः ॥ ७९९ ॥

॥ ९० ॥

अन्नदिणे नयराओ रयवाडीए गएण कुमरेण । दिट्ठो एगो पहिओ विसेसवत्तं च सो पुट्ठो ॥८००॥
सो भणइ देव ! कुंडिणपुराउ पट्ठावणीइ पट्ठविओ । नयरंमि पइट्ठाणे इब्भेण धणावहेणाहं ॥८०१॥
आगच्छंतेण मए कंचणपुरनामयंमि नयरंमि । जं अच्छरिअं दिट्ठं पुरिसुत्तम ! तं निसामेह ॥८०२॥
तत्थऽत्थि कंचणपुरे राया सिरिवज्जसेणनामुत्ति । तस्सऽत्थि पट्टदेवी कंचणमालत्ति विक्खाया ॥८०३॥
तीए कुक्खिसमुब्भवा पुत्ता चत्तारि संति सोंडीरा । जसधवल जसोहर-वयरसिंह-गंधव्वनामाणो ॥

अन्यस्मिन् दिने नगरात् राजवाटिकायां गतेन कुमारेण एकः पथिकः-पान्थो दृष्टो-विलोकितः च पुनः स पथिको विशेषवार्त्तां पृष्टः ॥ ८०० ॥ तदा स पथिको भणति हे देव ! इभ्येन-महर्द्धिकेन धनावहेन-धनावहनाम्ना श्रेष्ठिनाऽहं कुण्डिनपुरात् प्रतिष्ठाने नगरे-प्रतिष्ठानपुरे स्थापनिकया-दिवसनियमनेन प्रस्थापितोऽस्मि-मुक्तोऽस्मि ॥ ८०१ ॥ आगच्छता मया काञ्चनपुरनामके नगरे हे पुरुषोत्तम ! यत् आश्चर्यं दृष्टं तत्त्वं निशामय-शृणु ॥ ८०२ ॥ तत्र काञ्चनपुरे नगरे श्रीवज्रसेन इति नाम्ना राजाऽस्ति, तस्य राज्ञः काञ्चनमाला इति नाम्ना विख्याता-प्रसिद्धा पट्टदेवी-पट्टराज्ञी अस्ति, ॥ ८०३ ॥ तस्याः कुक्षौ समुद्भव-उत्पत्तिर्येषां ते ईदृशाः पुत्राश्चत्वारः सन्ति, कीदृशाः ?-'सोण्डीर' त्ति शौण्डीर्यवन्तः-पराक्रमवन्त इत्यर्थः, किंनामान इत्याह-यशोधवल१ यशोधर२ वज्रसिंह३ गान्धर्व४ नामानः ॥ ८०४ ॥

ताण उवरिं च एगा पुत्ती तियलुक्कसुंदरी अत्थि । तिअलोएवि न अन्ना जीए पडिछंदए कन्ना ॥
तीए अणुरूववरं अलहंतेणं च तेण नरवइणा । पारद्धो अत्थि तहिं सयंवरामंडवो देव ! ॥ ८०६ ॥
तत्थऽत्थि सुविच्छिन्नो उत्तुंगो मूलमंडवो रम्मो । मणिकंचणथंभट्ठिअपुत्तलियाखोहिअजणोहो ॥
तत्तो चउपासेसुं रइआ कोऊहलेहिं परिकलिआ । मंचाइमंचसेणी सग्गविमाणावलिसरिच्छा ॥
जे संति निमंतिअनरवराण पडिवत्तिगउरवनिमित्तं । तत्थ कणतिणसमूहा ते गरुया गिरिवरेहिंतो ॥

तेषां पुत्राणामुपरि च एका त्रैलोक्यसुन्दरी नाम पुत्री अस्ति, यस्याः कन्यायाः प्रतिच्छन्दके-प्रतिबिम्बे यत्सदृशीत्यर्थः अन्या कन्या त्रैलोक्येऽपि नास्ति ॥ ८०५ ॥ तस्याः कन्याया अनुरूपं-योग्यं वरं अलभमानेन-अप्राप्नुवता च तेन नरपतिना-राज्ञा हे देव-हे राजन् ! तत्र-नगरे स्वयंवरामण्डपः प्रारब्धोऽस्ति ॥ ८०६ ॥ तत्र-स्वयंवरामण्डपे सुतराम्--अतिशयेन विस्तीर्ण उत्तुंग-उच्चैस्तरो रम्यो-रमणीयो मूलमण्डपोऽस्ति, पुनः कीदृशः ?--मणिकाञ्चनस्तम्भेषु-रत्नस्वर्णमयस्तम्भेषु (स्थिताः) याः पुत्रिकाः-शालभञ्जिकास्ताभिः क्षोभितः-क्षोभं प्रापितो जनौघो-जनसमूहो यत्र स मणि० ॥ ८०७ ॥ ततो-मण्डपाच्चतुर्षु पार्श्वेषु रचिताः कुतूहलैः-कौतुकैः परिकलिता-समन्तात् युक्ता मञ्चातिमञ्चश्रेणी अस्ति, पुनः कीदृशी ?--स्वर्गे-देवलोके या विमानानां आवलिः-श्रेणिस्तत्सदृशा, तत्सदृशीत्यर्थः ॥ ८०८ ॥ तत्र प्रदेशे निमन्त्रितनरवराणां-आकारितभूपतीनां प्रतिपत्तिगौरवनिमित्तं-भक्ताद्यर्थं ये कणानां-अन्नानां तृणानां-घासानां समूहाः-पुञ्जाः सन्ति ते गिरिवरेभ्यो-महापर्वतेभ्योऽपि गुरुका-महान्तः सन्ति ॥ ८०९ ॥

आसाढपढमपक्खे बीयाए अत्थि तत्थ सुमुहुत्तो । कल्ले सा पुण बीआ मग्गो पुण जोअणे तीसं ॥
तं सोऊणं कुमरेण तस्स पहिअस्स दाविअं झत्ति । निअतुरयकंठकंदलभूसणसोवन्नसंकलयं ॥
कुमरो अ निआवासं पत्तो चिंतेइ पच्छिमनिसाए । काऊण खुज्जरूवं तंपि हु गंतूण पिच्छामि ॥
हारस्स पभावेणं संपत्तो तत्थ खुज्जरूवेणं । पिच्छेइ रायचक्कं उवविट्ठं उच्चमंचेसु ॥ ८१३ ॥
कुमरोवि खुज्जरूवो सयंवरामंडवंमि पविसंतो । पडिहारेण निसिद्धो देइ तओ तस्स करकडयं ॥

आषाढमासस्य प्रथमपक्षे द्वितीयायां तिथौ तत्र-तस्मिन्नगरे विवाहस्य सुमुहूर्त्तोऽस्ति, सा द्वितीया पुनः कल्ये--प्रभातेऽस्ति मार्गः पुनस्त्रिंशद्योजनानि अस्ति ॥ ८१० ॥ तत्पथिकवचनं श्रुत्वा कुमारेण तस्मै पथिकाय झटिति-शीघ्रं निजतुरगस्य-स्वकीयाश्वस्य यः कण्ठकन्दलस्तस्य भूषणं-शोभाकारकं यत्सौवर्णं-स्वर्णमयं सङ्कलकं तद्दापितम्, कण्ठो-गलः कन्दल इव--नवाङ्कुर इवेति कण्ठकन्दलः ॥ ८११ ॥ कुमारश्च निजावासं-स्वमन्दिरं प्राप्तः सन् पश्चिमरात्रौ चिन्तयति, किमित्याह-कुब्जरूपं कृत्वा तत्र गत्वा हु इति निश्चितं तमपि स्वयवरामण्डपं प्रेक्षे-पश्यामीत्यर्थः ॥ ८१२ ॥ ततः कुमारो हारस्य प्रभावेण तत्र-पुरपार्श्ववर्त्तिस्वयंवरामण्डपे कुब्जरूपेण सम्प्राप्तः सन् उच्चमञ्चेषु उपविष्टं-आसीनं राजचक्रं-राज्ञां समूहं प्रेक्षते-पश्यति ॥ ८१३ ॥ कुमारोऽपि कुब्जरूपः स्वयंवरामण्डपे प्रविशन् प्रतीहारेण-द्वारपालेन निषिद्धो-निवारितस्ततः--तदनन्तरं तस्मै-प्रतीहाराय करस्य कटकं-वलयं ददाति ॥ ८१४ ॥

पत्तो अ मूलमंडवथंभट्ठिअपुत्तलीण पासंमि । चिट्ठइ सुहं निसन्नो कुमरो कयकित्तिमकुरूवो ॥८१५॥
तं उच्चपिट्ठिदेसं संकुडियउरं च चिविडनासउडं । रासहदंतं तह उट्टहुट्ठयं कविलकेससिरं ॥८१६॥
पिंगलनयणं च पलोइऊण लोया भणंति भो खुज्ज ! । कज्जेण केण पत्तो तुमंति? तत्तो भणइ सोऽवि॥
जेण कज्जेण तुब्भे सव्वे अच्छेह आगया इत्थ । तेणं चिअ कज्जेणं अहयंपि समागओ एसो ॥

च पुनर्मूलमण्डपस्य स्थम्भेषु स्थिता याः पुत्रिकाः–शालभञ्जिकास्तासां पार्श्वे प्राप्तः सन् कुमारः सुखं निषण्णः–उपविष्ट इति, कीदृशः कुमारः ?--कृतं कृत्रिमं कुरूपं येन सः ॥ ८१५ ॥ अथ विशेषणैः कृत्रिमकुरूपस्य वर्णनमाह–तं कुब्जकं प्रलोक्येत्युत्तरत्र सम्बन्धः, कीदृशं त ?--उच्चः पृष्टिदेशः–पृष्ठिभागो यस्य स तं, पुनः सङ्कुचितं उरो–हृदयं यस्य स तं, च पुनः चिपिटं–कुत्सितविस्तृतं नासापुटं यस्य स तं, पुना रासभभ्य–गर्दभस्य दन्ता इव दन्ता यस्य स तं, तथा उष्ट्रस्येव ओष्ठौ यस्य स तं, पुनः कपिलाः–पिङ्गलाः केशा–वालाः शिरसि यस्य स तम् ॥ ८१६ ॥ च पुनः पिङ्गले–पीते नयने–लोचने यस्य स तं, ईदृशं तं कुब्ज प्रलोक्य–निरीक्ष्य लोका भणन्ति, भो कुब्ज ! त्वं केन कार्येण प्राप्तोऽसि–इहागतोऽसीति ?, ततः स कुब्जकोऽपि भणति–वक्ति ॥ ८१७ ॥ किं भणतीत्याह–अहो येन कार्येण यूयं सर्वेऽपि अत्र आगतास्तिष्ठथ तेनैव कार्येण–प्रयोजनेन एषोऽहमपि समागतोऽस्मि ॥ ८१८ ॥

हडहड हसंति सव्वे अहो इमो एरिसो सरूवोवि । जइ न वरिस्सइ नरवरधूया तो सा कहं होही ? ॥
इत्थंतरंमि नरवरधूया नरवरविमाणमारूढा । खीरोदगवरवत्था मुत्ताहलनिम्मलाहरणा ॥ ८२० ॥
करकलिअविमलमाला समागया मूलमंडवे जाव । ता सहसच्चिअ कुमरं सहावरूवं पलोएइ॥८२१॥
तं दट्ठूण पमुइयचित्ता चिंतेइ सा निवइधूया । रे मण! आणंदेणं वट्टसु एयस्स लंभेणं ॥ ८२२ ॥

एतत् कुब्जवचनं श्रुत्वा सर्वे नृपकुमारादयो हडहड इति हसन्ति, पुनरेवं वदन्ति--अहो इमं ईदृशं सरूपं–रूपवन्तमपि यदि नरवरस्य–राज्ञः पुत्री न वरिष्यति तत्-- तर्हि सा कन्या कथं–केन प्रकारेण भविष्यति ? ॥८१९॥ अत्रान्तरे–अस्मिन्नवसरे क्षीरोदकवरवस्त्रा–परिहितोज्ज्वलतरप्रधानवस्त्रा पुनर्मुक्ताफलानां निर्मलानि आभरणानि–हाराद्याभूषणानि यस्याः सा ईदृशा नरवरपुत्री वरं–प्रधानं यन्नरविमानं–शिबिकादिलक्षणं तत् आरूढा सती ॥ ८२० ॥ पुनः करे–हस्ते कलिता–प्राप्ता विमला–निर्मला माला यस्याः सा एवम्भूता च सती यावन्मूलमण्डपे समागता तावत् सहसा एव–सद्य एव कुमारं स्वभावरूपं–स्वमूलरूपयुक्तं प्रलोकयति–पश्यति ॥ ८२१ ॥ अथ सा नृपते–राज्ञः पुत्री तं–स्वभावरूपं श्रीपालकुमारं दृष्ट्वा प्रमुदितं–हर्षितं चित्तं यस्याः सा एवम्भूता सती चिन्तयति–विमृशति, किं चिन्तयतीत्याह–रे मनस्त्वं एतस्य–वरस्य लाभेन आनन्देन वर्त्तस्व ॥ ८२२ ॥

धन्ना कयपुन्नाऽहं महंतभागोदओऽवि मह अत्थि। मह मणजलनिहिचंदो जं एस समागओ कोऽवि॥
कुमरोवि तीइ दिट्ठिं दट्ठूणं साणुराग सकडक्खं। दंसेइ खुज्जयंपि हु अप्पाणं अंतरंतरियं ॥८२४॥
इत्तोवि हु पडिहारी जं जं वन्नेइ नरवरं तं तं। खिक्खोडेइ कुमारी रूववओदेसदोसेहिं ॥ ८२५ ॥
जो जइआ वन्निज्जइ सो तइआ होइ सरयससिवयणो। जो जइआ हीलिज्जइ सो तइआ होइ साममुहो॥

अहं धन्याऽस्मि, पुनः कृतं पुण्यं यया सा कृतपुण्याऽस्मि, मम भाग्योदयोऽपि महानस्ति, कुत इत्याह–यद्–यस्मात्कारणात् मम मन एव जलनिधिः–समुद्रस्तत्समुल्लासने चन्द्र इव–चन्द्रतुल्यः एष कोऽपि पुरुषः समागतोऽस्ति ॥ ८२३ ॥ कुमारोऽपि तस्या दृष्टिं सानुरागां–अनुरागयुक्तां पुनः सकटाक्षां–कटाक्षयुक्तां दृष्ट्वा आत्मानं अन्तरान्तरितं कुब्जकमपि दर्शयति, अन्तः अन्तः इतं–प्राप्तं अन्तरंतरितं मध्ये मध्ये इत्यर्थः ॥ ८२४ ॥ इतोऽपि च प्रतीहारी–वेत्रधरणी यं यं नरवरं–राजानं वर्णयति तं तं राजानं कुमारी रूपवयोदेशदोषैर्विखोडति–दूषयति, अस्य राज्ञो रूपमसम्यक्, अस्य वयो न सम्यक्, अस्य देशो न रम्य इत्यादिवाक्यैरित्यर्थः ॥ ८२५ ॥ यदा यो राजा वर्ण्यते तदा स-राजा शरच्छशिवदनो भवति, शरच्छशी–शरदृतुचन्द्रः स इव वदनं–मुखं यस्य स तथोक्तः, यदा यो राजा कुमार्या हील्यते तदा स राजा श्याममुखो भवति, श्यामं मुखं यस्य सः ॥ ८२६ ॥



जा पडिहारी थक्का सयलं निवमण्डलंपि वन्नित्ता। ताव कुमारी सपिअं खुज्जं पासेइ सविलक्खा ॥
इत्थंतरंमि थंभट्ठिआइ वरपुत्तलीइ वयणंमि। होऊण हारहिट्ठायग देवो एरिसं भणइ ॥ ८२८ ॥
यदि धन्याऽसि विज्ञाऽसि, जानासि च गुणान्तरम्। तदैनं कुब्जकाकारं, वृणु वत्से! नरोत्तमम् ॥८२९॥
तं सोऊण कुमारी वरेइ तं झत्ति कुज्जरूवंपि। कुमरो पुण सविसेसं दंसेइ कुरूवमप्पाणं ॥ ८३० ॥
इत्थंतरंमि सव्वे रायाणो अक्खिवंति तं खुज्जं। रे रे मुंचसु एयं वरमालं अप्पणो कालं॥ ८३१ ॥

यावत् प्रतीहारी सकलं–समस्तमपि नृपमण्डलं–राजसमूहं–वर्णयित्वा 'थक्क' त्ति मौनमाधाय स्थिता तावत्कुमारी स्वप्रियं कुब्जं पश्यति, कीदृशी सती?–सह वैलक्ष्येण वर्त्तते इति सविलक्ष्या विलक्षवदना सतीत्यर्थः ॥ ८२७ ॥ अत्रान्तरे–अस्मिन्नवसरे स्तम्भस्थिताया–वरपुत्रिकाया वदने–मुखे भूत्वा प्रविश्येत्यर्थः हारस्याऽधिष्ठायकदेव ईदृशं भणति ॥ ८२८ ॥ किं भणतीत्याह–हे वत्से!–हे पुत्रि यदि त्वं धन्याऽसि, पुनर्विशेषेण जानासि–विज्ञाऽसि, च पुनर्गुणानामन्तरं–भेदं जानासि, तदा एनं कुब्जकाकारं नरोत्तमं–पुरुषोत्तमं वृणु–अङ्गीकुरु ॥ ८२९ ॥ तत् श्रुत्वा कुमारी झटिति–शीघ्रं कुब्जरूपमपि तं कुमारं वृणोति, कुमारः पुनः आत्मानं सविशेषं कुरूपं दर्शयति, लोकेभ्य इति शेषः ॥ ८३० ॥ अत्रान्तरे सर्वे राजानस्तं कुब्जं आक्षिपन्ति–आक्रोशन्ति, कथमित्याह–रे रे कुब्ज! एतां वरमालां मुञ्च–त्यज, कीदृशीं वरमालां?–आत्मनः कालं–कालरूपाम् ॥ ८३१ ॥

जइ किरि मुद्धा एसा न मुणेइ गुणागुणंपि पुरिसाणं । तहवि हु एरिस कन्नारयणं खुज्जस्स न सहामो ॥

ता झत्ति चयसु मालं नो वा अम्हं करालकरवालो । एसो तुहगलनालं लुणिही नूणं सवरमालं ॥

हसिऊण भणइ खुज्जो जइ किरि तुब्भे इमीइ नो वरिया । दोहग्गदड्ढदेहा कीस न रूसेह ता विहिणो ? ॥

इण्हिं पुण तुम्हाणं परित्थिअहिलासविहिअपावाणं । सोहणखमं इमं मे असिधारा तित्थमेवऽत्थि ॥

इअ भणिऊणं तेसिं खुज्जेणं दंसिया तहा हत्था । जह ते भीइविहत्था सव्वेऽवि दिसोदिसं नट्ठा ॥

यदि किल एषा मुग्धा-भद्रकस्वभावा पुरुषाणां गुणाश्च अगुणाश्च एषां समाहारो गुणागुणमपि न मुणति-न जानाति तथापि ईदृशं कन्यारत्नं कुब्जस्य-न(स)हामहे ॥ ८३२ ॥ तत्-तस्मात्कारणात् झटिति-शीघ्रं मालां त्यज, यदि पुनर्न त्यक्ष्यसि तर्हि अस्माकं एष करालो-विकरालः करवालः--तरवारिः सवरमालं-वरमालया सहितं तव गलनालं लविष्यति-छेत्स्यति ॥ ८३३ ॥ ततः कुब्जो हसित्वा भणति--यदि किल अनया कन्यया यूयं न वृताः, कीदृशा यूयं ?-दौर्भाग्येण दग्धो देहः-शरीरं येषां ते ईदृशाः तत्-तर्हि विधेः-भाग्यस्य कथं न रुष्यथ ? येन यूयं दौर्भाग्यदूषिताः कृता इति भावः॥८३४॥ इदानीं-साम्प्रतं पुनः परस्त्रिया योऽभिलाषो-वाञ्छा तेन विहितं-कृतं-पापं यैस्ते तादृशानां युष्माकं शोधनक्षमं-शुद्धिकरणसमर्थं इदं मे-मम असिधारा-खड्गधारा तद्रूपं तीर्थमेवास्ति ॥ ८३५ ॥ इति भणित्वा कुब्जेन तेभ्यो-नृपेभ्यस्तथा हस्तौ दर्शितौ यथा ते राजानः सर्व्वेऽपि भीत्या-भयेन विहस्ता-व्याकुलाः सन्तो दिशोदिशं नष्टाः ॥ ८३६ ॥

॥ ६४ ॥

खुज्जेण तेण तह कहवि दंसिओ विक्कमो रणे तत्थ । जह रंजिअचित्तेहिं सुरेहिं मुक्का कुसुमवुट्ठी ॥

तं दट्ठूणं सिरिवज्जसेणरायावि रंजिओ भणइ । जह पयडियं बलं तह रूवं पयडेसु वच्छ ! नियं ॥

तक्कालं च कुमारं सहावरूवं पलोइऊण निवो । परिणाविअ नियधूयं साणंदो देइ आवासं ।८३९॥

तत्थ ठिओ सिरिपालो कुमरो तियलुक्कसुंदरीसहिओ । पावइ परमाणंदं जीवो जह भावणासहिओ ॥

अन्नदिणे कोइ चरो रायसहाए समागओ भणइ । देवदलपट्टणंमी अत्थि नरिंदो धरापालो ॥

तेन कुब्जेन तत्र रणे-सङ्ग्रामे तथा-तेन प्रकारेण कथमपि विक्रमः-पराक्रमो दर्शितो, यथा रञ्जितचित्तैः-प्रसन्नीभूतमानसैः सुरैः--देवैः कुसुमानां-पुष्पाणां वृष्टिर्मुक्ता कृतेत्यर्थः ॥ ८३७ ॥ तं-कुब्जपराक्रमं दृष्ट्वा श्रीवज्रसेनराजापि रञ्जितः सन् भणति, किं भणतीत्याह-हे वत्स ! यथा त्वया स्वकीयं बलं प्रकटितं-प्रकटीकृतं तथा निजं रूपं प्रकटय-प्रकटीकुरु ॥८३८॥ च पुनः नृपो-राजा तत्कालं स्वभावरूपं-स्वमूलरूपयुक्तं कुमारं प्रलोक्य निजपुत्रीं परिणाय्य सानन्दः-सहर्षः सन् निवासार्थं आवासं-प्रासादं ददाति ॥ ८३९ ॥ तत्र--आवासे स्थितस्त्रैलोक्यसुन्दर्या सहितः श्रीपालः कुमारः परमं-उत्कृष्टं आनन्दं प्राप्नोति, कया सहितः क इव ?-भावनया-सदध्यवसायपरिणत्या सहितो जीवो यथा, यथाशब्द इवार्थे, यथा सद्भावनासहितो जीवः परमानन्दं प्राप्नोति ॥ ८४० ॥ अन्यस्मिन् दिने कोऽपि चरो-हेरिको राजसभायां समागतो भणति-देवदलनाम्नि पत्तने धरापालो नाम नरेन्द्रो-राजाऽस्ति ॥ ८४१ ॥

तस्सुत्तमरायाणं पुत्तीओ राणियाउ चुलसीई। ताण मज्झंमि पढमा गुणमाला अत्थि सविवेया॥
तीए य पंच पुत्ता हिरण्णगब्भो य नेहलो जोहो। विजियारी अ सुकन्नो ताणुवरिं पुत्तिया चेगा॥
सा नामेणं सिंगारसुंदरि सिंगारिणी तिलुक्कस्स। रूवकलागुणपुन्ना तारुण्णालंकिअसरीरा॥८४४॥
तीए जिणधम्मरयाइ पंडिआ तह विअक्खणा पउणा। निउणा दक्खत्ति सहीण पंचगं अत्थि जिणभत्तं॥
ताणं पुरो कुमारी भणेइ अम्हाण जिणमयरयाणं। जइ कोइ होइ जिणमयविऊ वरो तो वरं होइ॥

तस्य राज्ञ उत्तमराजानां पुत्र्यश्चतुरशीती राज्ञ्यः सन्ति, तासां मध्ये प्रथमा गुणमाला नाम राज्ञी अस्ति, कीदृशी ?--सविवेका-विवेकसहिता ॥ ८४२ ॥ तस्याश्च राज्याः पञ्च पुत्राः सन्ति, तानेव नामत आह-हिरण्यगर्भः१ स्नेहलः२ योधः३ च पुनः विजितारिः४ सुकर्णः५ एते पञ्च पुत्राः च पुनस्तेषां पुत्राणामुपरि एका पुत्रिकाऽस्ति ॥ ८४३ ॥ सा कन्या नाम्ना श्रृङ्गारसुन्दरी अस्ति, कीदृशी ?-त्रैलोक्यस्य श्रृङ्गारिणी-श्रृङ्गारकारिणी-शोभाकारिकेत्यर्थः, पुनः रूपकलागुणैः पूर्णा-भृता तथा तारुण्येन अलङ्कृतं-विभूषितं शरीरं यस्याः सा ॥ ८४४ ॥ जिनधर्म्मे रताया--रक्तायास्तस्याः कन्यायाः सखीनां पञ्चकमस्ति, तदेव नामत आह-प्रथमा पण्डिता तथा द्वितीया विचक्षणा२ तृतीया प्रगुणा३ चतुर्थी निपुणा४ पञ्चमी दक्षा५ इति, कीदृशं सखीपञ्चकं ?--जिनस्य--अर्हतो भक्तम् ॥ ८४५ ॥ कुमारी तासां सखीनां पुरः-अग्रे भणति, जिनमते-जिनशासने रतानां-रक्तानां अस्माकं यदि कोऽपि जिनमतवित्-जिनमतज्ञः पुमान् वरो-भर्त्ता भवेत् तत्-तर्हि वरं-शोभनं भवति ॥

जेणं वरो वरिज्जइ मणनिव्वुइकारणेण कन्नाहिं। सा पुण धम्मविरोहे पइपत्तीणं कओ होइ?॥८४७॥
तम्हा अम्हेहिं परिक्खिऊण सम्मं जिणिंदधम्मंमि। जो होइ निच्चलमणो सो चेव वरो वरेअव्वो॥
भणिअं च पंडिआए सामिणि! जुत्तं तए इमं वुत्तं। किंतु निरुत्तो भावो परस्स नज्जइ कवित्तेणं॥
ता काऊण समस्सापयाइं सद्दिट्ठिपूरणिज्जाइं। अप्पेह जेहिं नज्जइ सुहासुहो धम्मपरिणामो॥
तो तीए कुमरीए अत्थि पइन्ना इमा कया जो उ। चित्तगयसमस्साओ पुरिस्सइ सो वरेअव्वो॥८५१॥

येन कारणेन कन्याभिः मनोनिर्वृतिकारणेन-मनःसुखनिमित्तं वरो-भर्त्ता व्रियते सा--मनोनिर्वृतिः पुनः पतिपत्न्योः-भर्तृस्त्रियोर्द्धर्म्मविरोधे सति कुतो भवति ?, प्रायो न भवत्येवेत्यर्थः ॥ ८४७ ॥ तस्मात् अस्माभिः सम्यक् परीक्ष्य यः पुमान् जिनेन्द्रधर्म्मे निश्चलं मनो यस्य स निश्चलमना भवति स एव वरो-भर्त्ता वरितव्यो--वरणीयः ॥ ८४८ ॥ तदा पण्डितया-पण्डितानाम्न्या सख्या च भणितं--हे स्वामिनि ! त्वया इदं युक्तं ( उक्तं ) किन्तु--परन्तु परस्य--अन्यपुरुषस्य निरुक्तः--अप्रकाशितो भावः--अभिप्रायः कवित्वेन ज्ञायते, यादृशं मनसि भवेत् तादृशं कवित्वे प्रादुर्भवतीत्यर्थः ॥ ८४९ ॥ तस्मात्सद्दृष्टिः--सम्यग्दृष्टिस्तेन पूरणीयानि--पूरयितुं शक्यानि समस्यापदानि कृत्वा अर्पयत-दत्त यैः पूरितैः शुभोऽशुभो वा धर्म्मपरिणामो ज्ञायते ॥ ८५० ॥ ततः--तदनन्तरं तया कुमार्या इयं प्रतिज्ञा कृताऽस्ति, यस्तु चित्तगता--मनोगताः समस्याः पूरयिष्यते स पुमानस्माभिर्वरितव्यः ॥ ८५१ ॥

सोऊण तं पसिद्धिं समागयाणेगपंडिया पुरिसा । पूरंति समस्साओ परं न तीए मणगयाओ ॥
एवं सा निवधूया सुपंडियाईहिं पंचहिं सहीहिं । सहिया चित्तपरिक्खं कुणमाणा वट्टइ जणाणं ॥
तं सोऊणं सव्वो सहाजणो भणइ केरिसं चुज्जं । पूरिज्जंति समस्सा किं केणवि परमणगयाओ ?॥
तं सोऊण कुमारो धणियं संजायमणचमक्कारो । पत्तो नियआवासं पुणो पभायंमि चिंतेइ॥८५५॥
हारस्स पभावेणं मह गमणं होउ पट्टणे तत्थ । जत्थऽत्थि रायकन्ना विहियपइन्ना समस्साहिं ॥८५६॥

तां प्रसिद्धिं श्रुत्वाऽनेके पण्डिताः पुरुषाः समागता सन्तः समस्याः पूरयन्ति, परं-केवलं तस्याः कन्यायाः मनोगताः समस्याः न पूरयन्ति ॥ ८५२ ॥ एवममुना प्रकारेण सा नृपपुत्री सुष्ठु शोभनाभिः पंडितादिभिः पञ्चभिः सखीभिः सहिता लोकानां--जनानां चित्तपरीक्षां कुर्वाणा वर्त्तते ॥ ८५३ ॥ तद्वचनं श्रुत्वा सर्व्वोऽपि सभाजनः--सभावर्त्तिलोको भणति, कीदृशं चोद्यं–आश्चर्यमस्ति ?, किं परस्य मनोगताः समस्याः केनापि पूर्यन्ते ॥ ८५४ ॥ तच्चरवचनं श्रुत्वा 'धणिय' न्ति–अत्यर्थं सञ्जातो मनसि चमत्कारो यस्य स एवम्भूतः कुमारो निजकावासं प्राप्तः सन् पुनः प्रभाते चिन्तयति ॥ ८५५ ॥ किं चिन्तयतीत्याह--हारस्य प्रभावेण तत्र–तस्मिन् देवदलाख्ये पत्तने मम गमनं भवतु यत्र नगरे समस्याभिर्विहिता--कृता प्रतिज्ञा यया सा ईदृशी राजकन्याऽस्ति ॥ ८५६ ॥



पत्तो अ तक्खणं चिय सहावरूवेण मंडवे तत्थ । जत्थत्थि रायपुत्ती संजुत्ता पंचहिं सहीहिं ॥८५७॥
दट्ठूण तं कुमारं मारोवमरूवमसमलायण्णं । नरवरधूयावि खणं विम्हिअचित्ता विचिंतेइ ॥८५८॥
जइ कहवि हु एस मणोगयाउ पूरेइ मह समस्साओ । ताऽहं तिन्नपइन्ना हवेमि धन्ना सुकयपुन्ना ॥
पुच्छइ तओ कुमारो कहह समस्सापयाइं निययाइं । तो कुमरिसंनिया पंडियावि पढमं पयं पढइ ।
'मणुवंछिय फल होइ'

अथ कुमारस्तत्क्षणमेव स्वभावरूपेण तत्र–तस्मिन्मण्डपे प्राप्तः यत्र पञ्चभिः सखीभिः संयुक्ता--सहिता राजपुत्री अस्ति ॥ ८५७ ॥ मारेण--कामेन उपमा यस्य तन्मारोपमं, मारोपमं रूपं यस्य तं, अत एव असमं--अतुलं लावण्यं यस्य स तं, तथाभूतं तं कुमारं दृष्ट्वा नरवरस्य–राज्ञः पुत्री अपि क्षणं यावत् विस्मितं–विस्मययुक्तं चित्तं यस्याः सा एवम्भूता सती विचिन्तयति ॥ ८५८ ॥ किं चिन्तयतीत्याह--हु इति निश्चितं एष पुमान् यदि कथमपि मम मनोगताः समस्याः पूरयति तत्--तर्हि अहं तीर्णा–पारं प्रापिता प्रतिज्ञा यया सा एवम्भूता सती धन्या पुनः सुकृतपुण्या भवामि, सुष्ठु कृतं पुण्यं यया सेति विग्रहः ॥ ८५९ ॥ ततः कुमारः पृच्छति, यूयं निजकानि–स्वकीयानि समस्यापदानि कथयत, ततः--तदनन्तरं कुमार्या संज्ञिता पण्डिता सखी अपि प्रथमं--एकं समस्यापदं पठति–कथयति ॥ ८६० ॥ किं तदित्याह--'मणु' इत्यादि प्रथमं समस्यापदमिदम्,

एसा सहीमुहेणं जं कहइ समस्सापयं मए णावि । पूरेयव्वं केणवि पुत्तलयमुहेण हेलाए ॥ ८६१ ॥
इय चिंतिऊण पासट्ठियस्स थंभस्स पुत्तलयसीसे । कुमरेण करो दिन्नो ता पुत्तलओ भणइ एवं ॥
अरिहंताईनवपय निअमणु धरइ जु कोइ । निच्छइ तसु नरसेहरह मणुवंछिअ फल होइ ॥८६३॥

तओ विअक्खणा पढेइ—अवर म झंखहु आल ॥ तओ कुमरकरपवित्तो पुत्तलओ पूरेइ—

अरिहंत देव सुसाधु गुरु धम्म तु दयाविसाल । मंतुत्तम नवकार पर अवर म झंखहु आल ॥८६४॥

एतत् समस्यापदं सखीमुखात् श्रुत्वा कुमारश्चिन्तयति—एषा राजकन्या यत्सखीमुखेन पदं कथयति तन्मयापि केनापि पुत्रकमुखेन हेलया--लीलया समस्यापदं पूरयितव्यम् ॥ ८६१ ॥ इति चिन्तयित्वा कुमारेण पार्श्वस्थितस्य स्तम्भस्य पुत्रकशीर्षे--पुत्रकमस्तके करो--हस्तो दत्तः, ततः पुत्रक एवं भणति ॥ ८६२ ॥ अर्हदादीनि नव पदानि निजमनसि यः कोऽपि धरति तस्य नरशेखरस्य निश्चयेन मनोवाञ्छितं फलं भवति ॥ ८६३ ॥ ततो विचक्षणानाम्नी द्वितीया सखी पठति, इदं द्वितीयं समस्यापदम्, ततः कुमारस्य करेण पवित्रः--पवित्रीभूतः पुत्रकः पूरयति, तथाहि--अर्हन् देवः सुसाधुः गुरुः धर्मस्तु दयया--अनुकम्पया विशालो--विस्तीर्णः मन्त्रेषु उत्तमो--मुख्यो नमस्काराख्यो मन्त्रः एते एव देवगुरुधर्ममन्त्रेषु पराः--श्रेष्ठाः सन्ति, अत एतानेव भजतेति शेषः, अपरं सर्वमपि आलं--अनर्थकं वस्तु मा 'जंखहु' त्ति अङ्गीकुरुत ॥ ८६४ ॥

तओ पउणा पढेइ—'करि सफलउं अप्पाणु' पुत्तलओ पूरेइ—

आराहिय धुरि देवगुरु देहि सुपत्तिहिं दाणु । तवसंजमउवयार करि करि सफलउं अप्पाणु ॥८६५॥

तओ निउणा पढेइ—'जित्तउं लिहिउं निलाडि' पुत्तलओ भणेइ—

अरि मन अप्पउं खंचि धरि चिंता जालि म पाडि । फलु तित्तउं परिपामीयइ जित्तउं लिहिउं निलाडि॥

तओ दक्खा पढेइ—'तसु तिहुयण जण दासु', तओ पुत्तलओ भणेइ—

अत्थि भवंतरसंचिउं पुण्ण समग्गल जासु । तसु बल तसु मइ तसु सिरिय तसु तिहुयणजण दासु॥

ततः प्रगुणाख्या तृतीया सखी पठति, इदं तृतीयं समस्यापदम्, पुत्रकः पूरयति, धुरि--आदौ देवं--वीतरागं गुरुं--सुसाधुं आराध्य--संसेव्य सुपात्रेभ्यो दानं देहि पुनस्तपः१संयमो२पकारान्३ कृत्वा आत्मानं सफलं कुरु ॥ ८६५ ॥ ततो निपुणाख्या चतुर्थी सखी पठति, इदं चतुर्थं समस्यापदम्, पुत्रको भणति--अरे ! मनस्त्वं आत्मानं खञ्चित्ति--आकृष्य धारय, चिन्ताजाले मा पातय, फलं तावदेव परि--सामस्त्येन प्राप्यते यावल्ललाटे लिखितं--कर्मरूपेण आत्मनि निबद्धमित्यर्थः ॥ ८६६ ॥ ततो दक्षानाम्नी पञ्चमी सखी पठति, इदं पञ्चमं समस्यापदं, ततः पुत्रको भणति, यस्य पुरुषस्य भवान्तरे सञ्चितं समर्गलं--अत्यधिकं पुण्यमस्ति तस्य पुरुषस्य बलं--पराक्रमो भवति, तस्यैव मतिः--बुद्धिः स्यात्, पुनस्तस्य श्रीः--लक्ष्मीः शोभा वा भवति, तथा तस्य त्रिभुवनजनो--जगत्त्रयलोको दासः--अनुचरो भवति ॥ ८६७ ॥

॥ ९७ ॥

दट्ठूण तं समस्सापूरणमइविम्हिया कुमारीवि । आणंदपुलइअंगी वरइ कुमारं तिजयसारं ॥ ८६८ ॥
रायपमुहोऽवि लोओ भणइ अहो चुज्जमेगमेयंति । जं पूरिज्जंति मणोगयाउ एवं समस्साओ ॥
जं च इमं सकरेणं पुत्तलयमुहेण पूरणं ताणं । तं लोउत्तरचरिअं कुमरस्स करेइ अच्छरिअं ॥८७०॥
राया नियधूयाए तीए पंचहिं सहीहिं सहियाए । कारेइ वित्थरेणं पाणिग्गहणं कुमारेणं ॥ ८७१ ॥
इत्थंतरंमि एगो भट्टो दट्ठूण कुमरमाहप्पं । पभणेइ उच्चसद्दं भो भो निसुणेह मह वयणं ॥८७२॥

तत्समस्यापूरणं दृष्ट्वा--निरीक्ष्य कुमारी अपि अतिविस्मिता--अतिशयेन आश्चर्यं प्राप्ताऽत एवानन्देन--हर्षेण पुलकितं--रोमोद्गमयुक्तं अङ्गं यस्याः सा एवम्भूता सती कुमारं वृणोति, कीदृशं कुमारम् ?--त्रिजगति सारं--सारभूतम् ॥ ८६८ ॥ राजप्रमुखोऽपि लोक इत्येवं भणति, अहो एकं एतत् चोद्यं--आश्चर्यं, किमेतदित्याह--यत् परेषां मनोगताः समस्या एवम्-उक्तप्रकारेण पूर्यन्ते ॥ ८६९ ॥ यच्च स्वकरेण--निजहस्तेन पुत्रकमुखेन इदं तासां समस्यानां पूरणं तत् कुमारस्य लोकोत्तर-चरितं--सर्वलोकेभ्यः प्रधानं चरित्रं आश्चर्यं करोति--उत्पादयति ॥ ८७० ॥ राजा पञ्चभिः सखीभिः सहिताया निजपुत्र्या विस्तारेण कुमारेण पाणिग्रहणं कारयति ॥ ८७१ ॥ अत्रान्तरे--अस्मिन्नवसरे एको भट्टः कुमारस्य माहात्म्यं दृष्ट्वा उच्चः शब्दो यत्र कर्म्मणि तत् उच्चशब्दं यथा स्यात्तथा प्रभणति--प्रकर्षेण कथयति, किं भणतीत्याह--भो भो लोका ! मम वचनं शृणुत--आकर्णयत ॥ ८७२ ॥

कुल्लागपुरे नयरे अत्थि नरिंदो पुरंदरो नाम । तस्सत्थि पट्टदेवी विजयानामेण सुपसिद्धा ॥ ८७३ ॥
हरिविक्कमनरविक्कमहरिसिरिसेणाइसत्तपुत्ताणं । उवरिंमि अत्थि एगा पुत्ती जयसुंदरीनाम॥८७४॥
तीए कलाकलावं रूवं सोहग्गलडहलायन्नं । दट्ठूण भणइ राया को णु इमीए वरो जुग्गो ?॥८७५॥
तो तीए उवझाओ भणइ महाराय! तुज्झ पुत्तीए । सयलकलासत्थाइं अवगाहंतीइ एयाए॥८७६॥
सत्थप्पत्थावपत्तं राहावेहस्स साहणसरूवं । विणएण अहं पुट्ठो कहियं च तयं मए एवं ॥ ८७७ ॥
मंडिज्जंते थंभट्ठिअट्ठ चक्काइं जंतजोगेणं । सिट्ठिविसिट्ठिकमेणं एगंतरियं भमंताइं ॥ ८७८ ॥

कुल्लागपुरे नगरे पुरेन्द्रो नाम नरेन्द्रो--राजाऽस्ति, तस्य राज्ञो विजयानाम्नी सुतरां--अतिशयेन प्रसिद्धा पट्टदेवी--पट्टराज्ञी अस्ति ॥८७३॥ हरिविक्रम१ नरविक्रम२ हरिषेण३ श्रीषेण४ आदिसप्तपुत्राणामुपरि एका जयसुन्दरीनाम पुत्री अस्ति ॥८७४॥ तस्याः कन्यायाः कलाकलापं--कलासमूहं पुनः रूपं--आकृतिं तथा सौभाग्येन 'लडहत्ति' सुन्दरं--लावण्यं दृष्ट्वा राजा भणति, नु इति वितर्केऽस्याः कन्याया योग्यो वरो--भर्त्ता कोऽस्ति? ॥ ८७५ ॥ ततस्तथा(स्याः) कन्याया उपाध्यायः--पाठको भणति--हे महाराज ! सकलकलाशास्त्राणि अवगाहमानया--अभ्यस्यन्त्या एतया तव पुत्र्या ॥८७६॥ शस्त्रप्रस्तावात्--शस्त्रप्रक्रमात् प्राप्तं राधावेधस्य साधनस्वरूपं विनयेन--बहुमानेन अहं पृष्टः, मया च तद्राधावेधसाधनस्वरूपं एवं--वक्ष्यमाणप्रकारेण कथितम् ॥ ८७७ ॥ कथमित्याह--स्तम्भे स्थितानि अष्ट चक्राणि मण्ड्यन्ते--रच्यन्ते, कीदृशानि ?--यन्त्रयोगेन--सृष्टि(विसृष्टि)क्रमेण एकान्तरितं भ्रमन्ति--भ्रमणं कुर्वाणानि एकं चक्रं सृष्ट्या भ्रमति द्वितीयं विसृष्ट्या पुनरेकं सृष्ट्या द्वितीयं विसृष्ट्या भ्रमतीत्यर्थः ॥८७८॥

चक्कारयविवरोवरि राहानामेण कट्ठपुत्तलिया । ठविया हवेइ तीए वामच्छी किज्जए लक्खं ॥८७९॥
हिट्ठट्ठियतिल्लकडाहराहपडिबिंबलद्धलक्खेणं । उड्ढसरेण नरेणं तीए वेहो विहेयव्वो ॥ ८८० ॥
सो पुण केणावि विरलेण चेव विन्नायधणुहवेएण । उत्तमनरेण किज्जइ जं गिज्जइ एरिसं लोए ॥
विणयंता चेव गुणा संतंतरसा किआ उ भावंता । कव्वं च नाडयंतं राहावेहंतमीसत्थं ॥ ८८२ ॥

चक्राणां अरकेषु यानि विवरणानि--छिद्राणि तेषामुपरि राधा इतिनाम्ना काष्ठपुत्रिका--काष्ठमयी पञ्चालिका स्थापिता भवति, तस्या वाममक्षि लक्ष्यं--वेध्यं क्रियते ॥ ८७६ ॥ अधःस्थितो यस्तैलकटाहकस्तस्मिन् यत् राधायाः प्रतिबिम्बं तेन लब्धं लक्ष्यं--वेध्यं येन स तेन नरेण ऊर्ध्वमुखबाणेन तस्या राधाया वामाक्षिप्रदेशे वेधो विधातव्यः--कर्त्तव्यः ॥ ८८० ॥ स राधावेधः पुनः केनापि विरलेनैव--उत्तमनरेण क्रियते, कीदृशेन ?--विज्ञातो--विशेषेण ज्ञातो धनुर्वेदो येन स तेन, ईदृशेन राधावेधः साध्यते इत्यर्थः, यस्मात्कारणात् लोके ईदृशं गीयते--कथ्यते ॥ ८८१ ॥ तथाहि--विनयोऽन्ते येषां ते विनयान्ता एव गुणाः सन्ति, सर्वगुणेषु विनयस्यैव प्राधान्यमित्यर्थः, तथा शान्तो रसोऽन्ते येषां ते शान्तान्ता रसाः सन्ति, रसेषु शान्तरसस्यैव प्राधान्यमित्यर्थः, पुनर्भावः--शुद्धाध्यवसाय एव अन्ते यासां ता भावान्ताः क्रिया--देवदर्शनाद्याः सन्ति, एतावता क्रियासु भावस्यैव प्राधान्यमित्यर्थः, च पुनर्नाटकं अन्ते यस्य तन्नाटकान्तमेव काव्यमस्ति, काव्येषु नाटकस्यैव प्राधान्यात्, तथा राधावेधोऽन्ते यस्य तद्राधावेधान्तं शस्त्रविज्ञानं--शस्त्रविज्ञानेषु तस्यैव प्राधान्यमित्यर्थः, ईकारः पादपूरणे ॥ ८८२ ॥

तं सोऊणमिमीए नरवर! तुह नंदणाइ सहसत्ति । बहुलोयाण समक्खं इमा पइन्ना कया अत्थि ॥
जो किर मह दिट्ठीए राहावेहं करिस्सए कोऽवि । तं चेव निच्छएणं अहं वरिस्सामि नररयणं ॥
एआइ पइन्नाए नज्जइ पुरिसुत्तमस्स कस्सावि । नूणं इमा भविस्सइ पत्ती धन्ना सुकयपुन्ना ॥
ता तुज्झेऽवि नरेसर! एवं चिंतं चएवि वेगेण । कारेह वित्थरेणं राहावेहस्स सामग्गिं ॥ ८८६ ॥
तं च तहा मंडाविअ रन्नावि निमन्तिया नरिंदा य । परमिक्केणवि केणवि राहावेहो न सो विहिओ॥

ततः राधावेधस्वरूपं श्रुत्वा हे नरवर--हे महाराज ! अनया त्वत्पुत्र्या सहसा--अकस्मात् बहुलोकानां समक्षं--प्रत्यक्षं इयं प्रतिज्ञा कृताऽस्ति, पूर्वार्द्धान्त इतिशब्दः पादपूरणे ॥ ८८३ ॥ केयं प्रतिज्ञेत्याह--यः किल कोऽपि पुमान् मम दृष्टौ--मम नेत्रागतो राधावेधं करिष्यते तमेव नररत्नं निश्चयेन अहं वरिष्यामि--भर्तृत्वेनाङ्गीकरिष्यामि ॥ ८८४ ॥ एतया प्रतिज्ञया 'नज्जइ' त्ति ज्ञायते नूनं--निश्चयेन इयं भवत्पुत्री कस्यापि पुरुषोत्तमस्य--उत्तमनरस्य पत्नी--भार्या भविष्यति, कीदृशी इयं ?--धन्या, पुनः सुष्ठु कृतं पुण्यं यया सा सुकृतपुण्या ॥ ८८५ ॥ तत्--तस्मात्कारणात् हे नरेश्वर ! यूयमपि एवं पूर्वोक्तप्रकारां चिन्तां त्यक्त्वा वेगेन राधावेधस्य सामग्रीं विस्तारेण कारयत ॥ ८८६ ॥ तां च राधावेधसामग्रीं तथा--तेन प्रकारेण मण्डयित्वा राज्ञापि नरेन्द्राश्च निमन्त्रिता--आहूताः परमेकेनापि--राज्ञा स राधावेधो न विहितो--न कृतः ॥८८७॥

सोवि हु जइ होइ अणेण चेव कुमरेण गुरुपभावेणं । नो अन्नेणं केणवि होही सो निच्छओ एसो॥
एवं कहिऊण निअट्टियस्स भट्टस्स कुंडलं दाउं । कुमरोऽवि सपरिवारो निवदत्तावासमणुपत्तो ॥
तत्थ ठिओ तं रयणिं रमणीगणरमणरंगरसवसओ । पच्चूसे पुण पत्तो कुल्लागपुरे तहच्चेव ॥८९०॥
उवविट्ठे य नरिंदे मिलिए लोए अ कुमरिदिट्ठीए । कुमरेण कओ राहावेहो हारप्पभावेणं ॥८९१॥
वरिओ तीए जयसुंदरीइ कुमरो पमोयपुन्नाए । नरनाहोऽवि हु महया महेण कारेइ वीवाहं ॥८९२॥

हु इति निश्चये स राधावेधोऽपि यदि भवति तर्हि अनेनैव कुमारेण भविष्यति, कीदृशेन ?--गुरुप्रभावेण--गुरुः-महान् प्रभावो यस्य स तेनेति, स राधावेधोऽन्येन केनापि पुरुषेण नो भविष्यति, एष निश्चयोऽस्ति ॥ ८८८ ॥ एवं कथयित्वा निवृत्ताय भट्टाय कुण्डलं दत्त्वा कुमारोऽपि सपरिवारः--स्त्र्यादिपरिवारसहितो नृपेण--राज्ञा दत्तमावासं--मन्दिरं अनुप्राप्तः ॥ ८८९ ॥ रमणीनां-स्त्रीणां यो गणः--समूहस्तेन सह यत् रमणं तत्र यो रङ्गो--रागः अनुरक्तत्वमितियावत् स एव रसः स्वादस्तस्य वशात् तां रजनीं--रात्रिं तत्रावासे स्थितः, प्रत्यूषे--प्रभाते पुनस्तथैव--तेनैव प्रकारेण हारप्रभावेणेत्यर्थः कुल्लागपुरे प्राप्तः(प्तः) ॥ ८९० ॥ नरेन्द्रे--राज्ञि च उपविष्टे सति लोके च सर्वस्मिन् मिलिते सति, द्वौ चकारौ तुल्यकालं सूचयतः, कुमारेण श्रीपालेन कुमार्य्याः--कन्याया दृष्टौ--लोचनाग्रे हारप्रभावेण राधावेधः कृतः ॥ ८९१ ॥ तया जयसुन्दर्य्या प्रमोदेन--हर्षेण पूर्णया--भृतया सत्या कुमारो वृतः नरनाथो--राजापि च महता महेन--उत्सवेन वीवाहं कारयति ॥ ८९२ ॥



नरवइदिन्नावासे सुक्खनिवासे रहेइ जा कुमरो । ता माउलनिवपुरिसा तस्साणयणत्थमणुपत्ता ॥
कुमरो निअरमणीणं आणयणत्थं च पेसए पुरिसे । ताओवि सुंदरीओ सबंधुसहियाउ पत्ताओ ॥
मिलिअं च तत्थ सिन्नं हयगयरहसुहडसंकुलं गरुयं । तेण समेओ कुमरो पत्तो ठाणाभिहाणपुरं ॥
आणंदिओ अ माउलराया तस्सुत्तमं सिरिं दट्ठुं । सुंदरिचउक्कसहिअं दट्ठूण पइं च मयणाओ ॥

सुखः--सुखकारी निवासो यस्मिन् स सुखनिवासस्तस्मिन् नरपतिना--राज्ञा दत्ते आवासे यावत् कुमारो रहेइत्ति--तिष्ठति तावन्मातुलनृपस्य--वसुपालराजस्य पुरुषाः--सेवकास्तस्य--कुमारस्यानयनार्थं--आकारणार्थं अनुप्राप्तः(प्ताः) ॥ ८९३ ॥ कुमारश्च निजरमणीनां--स्वस्त्रीणां आनयनार्थं पुरुषान् प्रेषयति, ता अपि सुन्दर्यो--नार्यः स्वैः--स्वकीयैर्बन्धुभिः--भ्रातृभिः सहिताः प्राप्ताः, तत्रागता इत्यर्थः ॥ ८९४ ॥ च पुनः तत्र गुरुकं--महत्सैन्यं मिलितं--एकत्रीभूतं, कीदृशं सैन्यं ?--हयगजरथसुभटैः सङ्कुलं--व्याप्तं, तेन सैन्येन समेतः--सहितः कुमारः स्थानाभिधानं--स्थानाख्यं पुरं प्राप्तः ॥ ८९५ ॥ च पुनः मातुर्भ्राता मातुलो राजा वसुपालस्तस्य कुमारस्य उत्तमां श्रियं दृष्ट्वा आनन्दित--आनन्दं प्राप्तः, च पुनः मदना--मदनसेनाद्याः कुमारस्त्रिय. सुन्दरीचतुष्कसहितं--चतसृभिः सुन्दरीभिर्युक्तं पतिं--भर्त्तारं दृष्ट्वा आनन्दिताः ॥ ८९६ ॥

तत्तो माउलयनिवो अरोगनरनाहसंजुश्रो कुमरं । सिरिसिरिपालं थप्पइ रज्जे अभिसेअविहिपुव्वं ॥
सिंहासणे निविट्ठो वरहारकिरीडकुंडलाहरणो । वरचमरछत्तपमुहेहिं रायचिन्हेहिं कयसोहो ॥
सिरिसिरिपालो राया नरवरसामंतमंतिपमुहेहिं । पणमिज्जइ बहुहयगयमणिमुत्तियपाहुडकरेहिं ॥
पवहणसिरीसमेश्रो असंखचउरंगसिन्नपरिकरिओ । चल्लइ सिरिपालनिवो निअजणणीपायनमणत्थं॥

ततः–तदनन्तरं मातुलकनृपोऽनेकैः-बहुभिनरर्नाथै–राजभिः सहितः श्रीश्रीपालं कुमारं अभिषेकविधिपूर्वं राज्ये स्थापयति, अभिषेको–राज्याभिषेकस्तस्य यो विधिः तत्पूर्वकमित्यर्थः ॥ ८९७ ॥ अथ राज्याभिषेकानन्तरं यादृशो राजा जातस्तादृशमाह–सिंहासने निविष्ट–उपविष्टः, पुनर्वराणि–प्रधानानि हारकिरीटकुण्डलाभरणानि यस्य सः, किरीटं–मुकुटं, पुनः वरैश्चामरच्छत्रप्रमुखै राजचिन्हैः कृता शोभा यस्य स तथोक्तः ॥ ८९८ ॥ एवम्भूतः श्रीश्रीपालो राजा नरवरसामन्तमन्त्रिप्रमुखैः प्रणम्यते--नमस्क्रियते, कीदृशैः नरवराद्यैः ?–बहवो हया--अश्वा गजा--हस्तिनो मणयो--वैडूर्याद्या मौक्तिकानि–मुक्ताफलानि तान्येव प्राभृतानि--ढौकितानि करेषु--हस्तेषु येषां ते तैस्तथोक्तैः ८९९ ॥ प्रवहणानां--यानपात्राणां या श्रीः-लक्ष्मीस्तया समेतः–सहितः, पुनर्न विद्यते सङ्ख्या यस्य तत् असङ्ख्यं यच्चतुरङ्गं-हस्त्यश्वरथपत्तिरूपं-सैन्यं तेन परिकरितः–परिवृतः परिकलित इति पाठान्तरं तेन युक्त इत्यर्थः, ईदृशः श्रीपालनृपो निजजनन्याः–स्वमातुः पादयोः–चरणयोर्नमनार्थं चलति–गच्छति ॥ ९०० ॥

सोवि हु आगच्छंतो ठाणे ठाणे नरिंदविंदेहिं । बहुविहभिट्टणएहिं भिट्टिज्जइ लद्धमाणेहिं ॥९०१॥
सोपारयंमि नयरे संपत्तो तत्थ परिसरमहीए । आवासिओ ससिन्नो सो सिरिपालो महीपालो ॥
पुच्छइ पहाणपुरिसे जं सोपारयनिवो न दंसेइ । भत्तिं वा सत्तिं वा तं नाऊणं कहह तुरियं॥९०३॥
नाऊण तेहिँ कहियं नरनाहो नाम इत्थ अत्थि महसेणो। तारा य तस्स देवी तक्कुच्छिसमुब्भवा, एगा॥

हु इति पादपूरणे स–श्रीपालोऽपि आगच्छन् स्थाने स्थाने नरेन्द्रवृन्दैः–नृपसमूहैर्बहुविधैः–अनेकप्रकारैः 'भिट्टणएहि' ति ढौकनैः 'भिट्टिज्जइ' त्ति ढौक्यते, कीदृशैर्नरेन्द्रवृन्दैः ?-लब्धमानैः लब्धो मानः–सन्मानो यैस्ते तैः ॥ ९०१ ॥ धावं–चलन् क्रमेण सोपारके नगरे सम्प्राप्तस्तत्र 'परिसरमहीए' त्ति पुरपार्श्ववर्त्तिभूमौ स श्रीपालो महीपालो राजा ससैन्यः–सैन्यसहितः आवासितो-निवासं कृतवान् उत्तीर्ण इत्यर्थः ॥ ९०२ ॥ अथ श्रीपालो राजा प्रधानपुरुषान् पृच्छति–सोपारकपुरस्य नृपो–राजा यत् भक्तिं वा-प्रसादनां शक्तिं वा-सामर्थ्यं न दर्शयति, तत् ज्ञात्वा त्वरितं–शीघ्रं यूयं कथयत ॥ ९०३ ॥ तैः प्रधानपुरुषैस्तत्स्वरूपं ज्ञात्वा राज्ञोऽग्रे कथितं–हे महाराज ! अत्र–नगरे महासेनो नाम नरनाथो–राजाऽस्ति, च पुनः तस्य राज्ञस्तारा नाम देवी–राज्ञी अस्ति, तत्कुक्षिसम्भवा–तस्याः कुक्षेरुत्पन्ना एका ॥ ९०४ ॥

तिजयसिरितिलयभूया धूया सिरितिलयसुंदरीनामा ! अज्जेव कहवि दुट्ठेण दीहपिट्ठेण सा दट्ठा ॥
विहिया बहुप्पयारा उवयारा मंतओसहिमणीहिं । तहवि न तीए सामिअ ! कोऽवि हु जाओ गुणविसेसो॥
तेण महादुक्खेणं पीडियहियओ नरेसरो सो उ । नो आगओऽत्थि इत्थं अपसाओ नेव कायव्वो ॥
राया भणेइ सा कत्थ? अत्थि दंसेह मज्झ झत्ति तयं । जेणं किज्जइ कोऽवि हु उवयारो तीइ कन्नाए॥
एवं चेव भणंतो नरनाहो तुरयरयणमारुहिउं । जा जाइ पुराभिमुहं ता दिट्ठो बहुजणसमूहो ॥

श्रीतिलकसुन्दरीनामा पुत्री अस्ति, कीदृशी सा ?-त्रिजगच्छ्रियः-त्रैलोक्यलक्ष्म्याः शिरसि तिलकभूता-तिलकसदृशी सा तिलकसुन्दरी कन्याऽद्यैव कथमपि-केनापि प्रकारेण दुष्टेन दीर्घपृष्ठेन-सर्पेण दष्टा ॥ ६०५ ॥ मन्त्रौषधिमणिभिर्मन्त्रैः औषधिभिर्मणिभिश्चेत्यर्थः, बहुप्रकारा उपचारा विहिता-कृताः, तथापि-हे स्वामिन् ! तस्याः कन्यायाः हु इति निश्चयेन कोऽपि गुणविशेषो न जातः ॥ ६०६ ॥ तेन महादुःखेन पीडितं हृदयं यस्य स एवम्भूतः स तु नरेश्वरो-राजा नो आगतोऽस्ति, अत्र अप्रसादो नैव कर्त्तव्यः-अप्रसन्नता न कार्येत्यर्थः ॥६०७॥ तदा राजा श्रीपालो भणति, सा कन्या कुत्राऽस्ति? झटिति-शीघ्रं मह्यं तां-कन्यां दर्शयत येन तस्याः कन्यायाः कोऽपि उपचारो-विषनिराकरणोपायः क्रियते ॥ ६०८ ॥ एवम्-अमुना प्रकारेण भणन्-कथयन् एव नरनाथो-राजा श्रीपालस्तुरगरत्नं-अश्वरत्नं आरुह्य यावत् पुराभिमुखं-नगरसम्मुखं याति तावद्बहूनां जनानां-लोकानां समूहो दृष्टः ॥ ६०९ ॥

॥ १०२ ॥

नायं च नरवरेणं नूणं सा आणिया मसाणंमि । तहवि हु पिच्छामि तयं मा हु जियंती कहवि हुज्जा॥
एवं च चिंतयंतो पत्तो सहसत्ति तत्थ नरनाहो । पभणेइ इक्कवारं मह दंसह झत्ति तं दट्ठुं ॥९११॥
भणियं च तेहिं नरवर ! किं दंसिज्जइ मयाइ बालाए?। अम्हाणं सव्वस्सं अवहरियं अज्ज हय विहिणा॥
राया भणेइ भो ! भो ! अहिदट्ठा मुच्छिया मयसरिच्छा । दीसंति तहवि तेसिं जहा तहा दिज्जइ न दाहो॥
तो तेहि दंसिया सा चियासमीवंमि महियले मुक्का । कंठट्ठिअहारेणं रन्ना करवारिणा सित्ता॥९१४॥

च पुनः नरवरेण-राज्ञा ज्ञातं नूनं-निश्चयेन सा कन्या श्मशाने आनीता दृश्यते इति शेषः, तथापि तां प्रेक्षे-पश्यामि मा(सा)कथमपि जीवन्ती भवेत्, द्वौ हुशब्दौ वाक्यालङ्कारे पादपूरणे वा ॥ ६१० ॥ एवं च चिन्तयन् नरनाथो-राजा सहसेति-सद्यस्तत्र प्राप्तः सन् प्रभणति-प्रकर्षेण कथयति, भो लोकाः ! तां सर्पदष्टां कन्यां एकवारं झटिति-शीघ्रं मह्यं दर्शयत ॥ ६११ ॥ तैश्च भणितं-कथितं हे नरवर ! मृतायाः बालायाः किं दर्श्यते ? हतेति खेदे अद्य विधिना-दैवेन अस्माकं सर्वस्वं अपहृतम् ॥ ६१२ ॥ राजा भणति, भो भो लोका ! अहिना-सर्पेण दष्टाः पुरुषाः मूर्च्छिताः सन्तो मृतसदृक्षा-मृतसदृशा दृश्यन्ते, तथापि तेषां-सर्पदष्टानां यथा तथा-येन तेन प्रकारेण दाहो न दीयते ॥ ६१३ ॥ ततस्तैः पुरुषैः सा कन्या दर्शिता, कीदृशी सा ?-चितायाः समीपे महीतले-पृथ्वीतले मुक्ता तदा कण्ठे स्थितो हारो यस्य स तेन राज्ञा करवारिणा-स्वहस्तजलेन सिक्ता ॥ ९१४ ॥

तक्कालं सा बाला सुत्तविबुद्धुव्व उट्ठिया झत्ति । विम्हियमणा य जंपइ ताय ! किमेसो जणसमूहो ?॥
महसेणो साणंदो पभणइ वच्छे ! तुमं कओ आसि ?। जइ एस महाराओ नागच्छिज्जा कयपसाओ ॥
एएणं चिय दिन्ना तुह पाणा अज्ज परमपुरिसेणं । जेण चियाओ उत्तारिऊण उट्ठावियासि तुमं ॥
तो तीए साणंदं दिट्ठो सो समणसायरससंको । सिरिपालो भूवालो सिणिद्धमुद्धेहिं नयणेहिं ॥९१८॥
महसेणो भणइ निवं अम्हं तुम्हेहिं जीविअं दिन्नं । तो जीविआओ अहियं एयं गिण्हेह तुज्झेवि॥

ततः सा बाला सुप्ता सती विबुद्धा—जागृता इव तत्कालं उत्थिता, च पुनः विस्मितं—आश्चर्ययुक्तं मनो यस्याः सा विस्मितमनाः सती झटिति—शीघ्रं जल्पति, हे तात ! एष जनसमूहः किं ?, किमर्थमित्यर्थः ॥ ९१५ ॥ महासेनो राजा सानन्दः-सहर्षः सन् प्रभणति—वक्ति, हे वत्से—हे पुत्रि ! यदि एष महाराजो नागच्छेत् तर्हि त्वं कुत आसीत् ?, कीदृश एषः ?—कृतः प्रसादः—अनुग्रहो येन सः कृतप्रसादः ॥ ९१६ ॥ एतेनैव परमपुरुषेण—उत्तमपुरुषेण अद्य तुभ्यं प्राणा दत्ताः येन चितातः—चित्याया उत्तार्य त्वं उत्थापिताऽसि—ऊर्ध्वीकृताऽसि ॥ ९१७ ॥ ततः—तदनन्तरं तया—राजकन्यया सानन्दं—सहर्षं यथा स्यात्तथा स श्रीपालो भूपालः स्निग्धमुग्धाभ्यां—सस्नेहरम्याभ्यां नयनाभ्यां दृष्टः, कीदृशः सः ?—स्वमन एव सागरः—समुद्रस्तत्र शशाङ्कः—चन्द्र इव स्वमनःसागरशशाङ्कस्तदुल्लासकत्वादिति भावः ॥ ९१८ ॥ अथ महासेनो राजा नृपं—श्रीपालं भणति, युष्माभिरस्मभ्यं जीवितं दत्तं, ततः—तस्मात्कारणात् जीवितादप्यधिकां एतां मत्पुत्रीं यूयमपि गृह्णीत ॥ ९१९ ॥

इअ भणिऊणं रन्ना नियकन्ना तस्स रायरायस्स । दिन्ना सा तेणावि हु परिणीआ झत्ति तत्थेव ॥
तीए अ तिलयसुन्दरिसहियाओ ताउ अट्ठ मिलियाओ । सिरिपालस्स पिआओ मणोह-
राओ परं तहवि ॥ ९२१ ॥
जह अट्ठदिसाहिं अलंकिओऽवि मेरू सरेइ उदयसिरिं । जह वंछइ जिणभत्तिं अडग्गमहिसीजुओऽवि हरी॥
अवि अट्ठदिट्ठिसहिओ जहा सुदिट्ठी समीहए विरइं । साहू जह ऽट्ठपवयणमाइजुओवि हु सरइ समयं॥

इति भणित्वा—उक्त्वा महासेनेन राज्ञा तस्मै राजराजाय—महाराजाय निजकन्या दत्ता, राज्ञां राजा राजराजस्तस्मै इति विग्रहः, तेन श्रीपालमहाराजेनापि झटिति—शीघ्रं तत्रैव स्थाने सा परिणीता ॥९२०॥ तया च तिलकसुन्दर्या सहिता मनोहराः-सर्वजनमनोहारिण्यस्ताः श्रीपालस्य प्रिया अष्ट मिलिताः, परं तथापि स राजा नवमीं प्रियां स्मरतीत्युत्तरेण सम्बन्धः ॥ ९२१ ॥ कः कामिवेत्याह—यथाऽष्टदिशाभिः—पूर्वादिभिरलङ्कृतोऽपि—शोभितोऽपि मेरुः—सुरगिरिः उदयश्रियं—सूर्योदयलक्ष्मीं स्मरति, पुनर्यथा अष्टभिरग्रमहिषीभिः-इन्द्राणीभिर्युतोऽपि—सहितोऽपि हरिः—इन्द्रो जिनभक्तिं वाञ्छति ॥ ९२२ ॥ पुनर्यथाऽष्टदृष्टिभिर्मित्रा१ तारा२ बला३ दीप्रा४ स्थिरा५ कान्ता६ प्रभा७ परा८ नामभिः सहितोऽपि सुदृष्टिः—सम्यग्दृष्टिरात्मा विरतिं—सावद्ययोगविरमणरूपां समीहते—वाञ्छति, अष्टदृष्टिस्वरूपं तु योगदृष्टिसमुच्चयाज्ज्ञेयम्, पुनर्यथा अष्टप्रवचनमातृभिः—समितिपञ्चकगुप्तित्रयरूपाभिर्युतोऽपि साधुः हु इति निश्चितं समतां—समभावरूपां स्मरति ॥ ९२३ ॥

जह जोई अट्ठमहासिद्धिसमिद्धोऽवि ईहए मुत्तिं । तह झायइ पढमपिअं अट्ठपियाहिं स सहिओऽवि॥

॥ १०४ ॥ तो तीए उक्कंठियचित्तो जणणीइ नमणपवणो य । सो सिरिपालो राया पयाणढक्काओं दावेइ ॥

मग्गे हयगयरहभडकन्नामणिरयणसत्थवत्थेहिं । भिट्टिज्जइ सो राया पए पए नरवरिंदेहिं ॥ ९२६ ॥

एवं ठाणे ठाणे सो बहुसेणाविवड्ढियबलोहो । महिवीढे नइवड्ढियनीरो उयहिव्व वित्थरइ ॥ ९२७ ॥

पुनः यथा योगी—ज्ञानदर्शनचारित्रात्मकयोगयुक्तः पुमान् अष्टमहासिद्धिभिरणिमादिभिः समृद्धोऽपि मुक्तिं—निर्वाणात्मिकां ईहते—वाञ्छति, तथा—तेन प्रकारेण स श्रीपालोऽष्टप्रियाभिः सहितोऽपि प्रथमप्रियां मदनसुन्दरीं ध्यायति—निरन्तरं हृदि स्मरति ॥ ६२४ ॥ ततः—तदनन्तरं तस्यां मदनसुन्दर्यां तन्मिलने इत्यर्थः उत्कण्ठितं—औत्सुक्ययुक्तं चित्तं—मनो यस्य स तथोक्तश्च पुनर्जनन्या—मातुर्नमने—नमस्करणे प्रवणः—तत्परः स श्रीपालो राजा प्रयाणढक्काः—प्रस्थानयशःपटहान् दापयति ॥ ६२५ ॥ स श्रीपालो राजा मार्गे पदे पदे नरवरेन्द्रैः हयादिभिः ‘ भिट्टिज्जइ ’ त्ति ढौक्यते, हया गजा रथा भटाः कन्याश्च प्रतीता मणयः—चन्द्रकान्ताद्या रत्नानि—माणिक्यादीनि शस्त्राणि वस्त्राणि च बहुविधानि तैरित्यर्थः, क्वचित्कन्नास्थाने ‘ कंचणत्ति ’ पाठस्तत्र काञ्चनं—सुवर्णमित्यर्थः ॥ ६२६ ॥ एवम्—अमुना प्रकारेण स श्रीपालो राजा स्थाने स्थाने बहुसेनया विवर्द्धितो बलौघः—सैन्यसमूहो यस्य स एवम्भूतः सन् महीपीठे विस्तरति—विस्तारं प्राप्नोति, क इव ?—नदीभिर्विवर्द्धितं नीरं—पानीयं यस्य स एवम्भूत उदधिः—समुद्र इव, यथा भूपीठे विस्तरति तथेत्यर्थः ॥ ६२७ ॥ ॥ १०४ ॥

मरहट्ठय सोरट्ठय सलाडमेवाडपमुहनूवाले । साहंतो सिरिपालो मालवदेसं समणुपत्तो ॥ ९२८ ॥

तं परचक्कागमणं सोऊणं चरमुहाओं अइगरुयं । सहसत्ति मालविंदो भयभीओ होइ गढसज्जो ॥

कप्पडचुप्पडकणतिणजलइंधणसंगहा य किज्जंति । सज्जिज्जंति अ जंता तह सज्जिज्जंति वरसुहडा ॥

एवं सा उज्जेणी नयरी बहुजणगणेहिं संकिन्ना । परिवेढिया समंता तेणं सिरिपालसिन्नेणं ॥९३१॥

महाराष्ट्रसौराष्ट्रलाटसहितमेदपाटप्रमुखा देशविशेषास्तेषां ये भूपाला राजानस्तान् ( साधयन् ) श्रीपालो मालवदेशं सं—सम्यक्—प्रकारेण अनुप्राप्तः ॥ ६२८॥ मालवस्येन्दो—मालवेन्द्रः प्रजापालो राजा चरमुखात्—हेरिकमुखात् अतिगुरुकं—अतिमहत् तत्परचक्रागमनं—परसैन्यागमनं श्रुत्वा सहसा इति—अकस्मात् भयभीतः सन् दुर्गसज्जो भवति, दुर्गं सज्जीकृत्य स्थितवानित्यर्थः ॥ ६२६ ॥ तथाहि—‘ कप्पड ’ त्ति वस्त्राणि ‘ चुप्पड ’ त्ति घृतादि कणा—धान्यानि तृणानि—घासादीनि जलं—पानीयं इन्धनानि—ज्वालनकाष्ठादीनि तेषां सङ्ग्रहाः क्रियन्ते, च पुनः यन्त्राणि—शतघ्न्यादीनि सज्ज्यन्ते—सज्जीक्रियन्ते, तथा वरसुभटाः—प्रधानशूरपुरुषाः प्रशस्यन्ते ॥ ६३० ॥ एवम्—अमुना प्रकारेण सा उज्जयिनिनगरी बहूनां जनानां—लोकानां गणैः—समूहैः सङ्कीर्णा सती तेन श्रीपालसैन्येन समन्तात्—सर्वासु दिक्षु परिवेष्टिता ॥ ९३१ ॥

आवासिए अ सिन्ने रयणीए पढमजामसमयंमि । हारपभावेण सयं राया जणणीगिहं पत्तो ॥
आवासदुवारि ठिओ सिरिपालनरेसरो सुणइ ताव । कमलप्पभा पयंपइ वहुअं पइ एरिसं वयणं ॥
वच्छे ! परचक्केणं नयरी परिवेढिया समंतेणं । हल्लोहलिओ लोओ किं किं होही न याणामि ? ॥९३४॥
वच्छस्स तस्स देसंतरंमि पत्तस्स वच्छरं जायं । वच्छे ! कावि न लब्भइ अज्जवि सुद्धी तुह पियस्स॥
पभणेइ तओ मयणा मा मा मा माइ ! किंपि कुणसु भयं । नवपयझाणंमि मणे ठियंमि जं हुंति न भयाइं ॥

सैन्ये च आवासिते–यथास्थानमुत्तीर्णे सति रजन्यां–रात्रौ प्रथमयामसमये–आद्यप्रहरकाले राजा श्रीपालो हारप्रभावेण स्वयम्–आत्मना जनन्या–मातुर्गृहं प्राप्तः ॥९३२॥ श्रीपालनरेश्वर आवासस्य–मातुर्गृहस्य द्वारे स्थितः–ऊर्ध्वः सन् यावत् शृणोति तावत् कमलप्रभा–स्वमाता वधूं–मदनसुन्दरीं प्रति ईदृशं–वक्ष्यमाणं वचनं प्रजल्पति–कथयति, कीदृशमित्याह– । ९३३ ॥ हे वत्से! परचक्रेण–परसैन्येन नगरी समन्तेन–सर्वासु दिक्षु परिवेष्टिताऽस्ति, लोकः सर्वोऽपि हल्लोहलितो–व्याकुलीभूतोऽस्ति, अनुकरणशब्दोऽयं, अथ किं ? किं ? भविष्यतीति न जानामि ॥ ९३४ ॥ तस्य वत्सस्य–मत्पुत्रस्य देशान्तरे प्राप्तस्य वत्सरं–एकं वर्षं जातं, हे वत्से! अद्यापि तव प्रियस्य–त्वद्भर्त्तुः कापि शुद्धिर्न लभ्यते, उदन्तलेशोऽपि न लब्धः इत्यर्थः ॥ ९३५ ॥ ततः–तदनन्तरं मदनसुन्दरी प्रकर्षेण भणति, हे मातर्मा मा मा किमपि भयं कुरुष्व, यद्–यस्मात्कारणात् नवपदध्याने मनसि स्थिते सति भयानि न भवन्ति ॥ ९३६ ॥



जं अज्जं चिय संझासमए मह जिणवरिंदपडिमाओ । पूयंतीए जाओ कोइ अउव्वो सुहो भावो ॥
तेणं चिय अज्जवि मह मणंमि नो माइ माइ! आणंदो । निक्कारणं सरीरे खणे खणे होइ रोमंचो ॥
अन्नं च मज्झ वामं नयणं वामो पओहरो चेव । तह फंदइ जह मन्ने अज्जेव मिलेइ तुह पुत्तो ॥९३९॥
तं सोऊणं कमलप्पभावि आणंदिआ भणइ जाव । वच्छे! सुलक्खणा तुह जीहा एअं हवउ एवं ॥
ताव सिरिपालराया पियाइ धम्मंमि निच्चलमणाए । नाऊण सच्चवयणं बारं बारंति जंपेइ ॥ ९४१ ॥

पुनरद्यैव सन्ध्यासमये जिनवरेन्द्रप्रतिमाः पूजयन्त्या मम यतः कोऽपि अपूर्वः शुभभावो–अध्यवसायो जातः–समुत्पन्नः ॥ ९३७ ॥ तेनैव हे मातः ! अद्यापि मम मनसि आनन्दो–हर्षो न माति, तथा क्षणे क्षणे शरीरे निष्कारणं–कारणं विनैव रोमाञ्चो–रोमोद्गमो भवति ॥ ९३८ ॥ अन्यच्च मम वामं–दक्षिणेतरं नयनं–नेत्रं वाम एव च पयोधरः–स्तनस्तथा स्पन्दते–स्फुरति यथा अद्यैव तव पुत्रो मिलति, अहमिति मन्ये–जानामि ॥ ९३९ ॥ तद्वधूवचनं श्रुत्वा कमलप्रभापि आनन्दिता–हर्षिता सती यावद्भणति–वक्ति, किं भणतीत्याह–हे वत्से ! तव जिह्वा सुलक्षणाऽस्ति, एतत् एवं भवतु इति ॥ ९४० ॥ तावत् श्रीपालो राजा धर्म्मे निश्चलं मनो यस्याः सा तस्याः प्रियायाः–स्वपत्न्याः सत्यवचनं ज्ञात्वा द्वारं द्वारमिति जल्पति ॥ ९४१ ॥

॥ १०९ ॥ कमलप्पभा पयंपइ नूणमिणं मज्झ पुत्तवयणंति । मयणावि भणइ जिणमयवयणाइं किमन्नहा हुंति?॥
उग्घाडियं दुवारं सिरिपालो नमइ जणणिपयजुयलं । दइअं च विणयपउणं संभासइ परमपिम्मेणं॥
आरोविऊण खंधे जणणिं दइअं च लेवि हत्थेण । हारप्पभावउच्चिय पत्तो नियगुड्डरावासं ॥९४४॥
तत्थ य जणणिं पणमित्तु नरवरो भद्दासणे सुहनिसन्नं । पभणेइ माय ! तुह पयपसायजणियं फलं एयं ॥

तदा कमलप्रभा-नृपमाता प्रकर्षेण कथयति-नूनं-निश्चितं इदं मम पुत्रस्य वचनमिति, ततो मदनसुन्दर्यपि भणति-जिनमतानां-जिनमतसेवकानां वचनानि किं अन्यथा भवन्ति-असत्यानि भवन्ति ?, न भवन्त्येवेत्यर्थः, अभेदोपचारात् जिनमतशब्देन तत्सेवका गृह्यन्ते ॥ ९४२ ॥ ततो द्वारं उद्घाटितं तदा श्रीपालो राजा जनन्या-मातुः पदयुगलं-चरणद्वयं नमति, च पुनर्विनये-विनयकरणे प्रवणां-तत्परां दयितां-प्रियां मदनसुन्दरीं परमप्रेम्णा-उत्कृष्टस्नेहेन सम्भाषयति ॥ ९४३ ॥ ततः श्रीपालो जननीं-स्वमातरं स्कन्धे आरोप्य च पुनः दयितां-स्त्रियं हस्तेन लात्वा-गृहीत्वा हारप्रभावत एव निजगुड्डरावासं-स्वकीयपटावासं प्राप्तः ॥ ९४४ ॥ तत्र च पटावासे नरवरो राजा श्रीपालो भद्रासने-सिंहासनविशेषे सुखेन निषण्णां-उपविष्टां जननीं प्रणम्य-नमस्कृत्य प्रभणति-वक्ति, किं भणतीत्याह-हे मातस्तव पदप्रसादजनितं-त्वच्चरणप्रसादादुत्पन्नं एतत्फलमस्ति ॥ ९४५ ॥ ॥ १०९ ॥

पणमंति तओ ताओ अट्ठ ण्हुहाओ ससासुयाइ पए । अवि मयणसुंदरीए जिट्ठिए निययभइणीए ॥
अभिणंदियाउ ताओ ताहिं आणंदपूरियमणाहिं । सव्वोवि हु वुत्तंतो मयणमंजूसाइ कहिओ अ ॥
तासिं च नवण्हंपि हु वत्थालंकारसारपरिवारं । देइ निवो साणंदो इक्किक्कं नाडयं चेव ॥ ९४८ ॥
पुट्ठा जिट्ठा मयणा तुह जणयंपि हु कहं आणावेमि ? । तीए वुत्तं सो एउ कंठपीठट्ठियकुहाडो ॥
तं च तहा दूयमुहेणं तस्स रन्नो कहावियं जाव । ताव कुविओ अ मालवराया मंतीहिं भणिओ य॥

ततः-तदनन्तरं ता अष्ट स्नुषाः-पुत्रस्य वध्वः श्वश्र्वाः-निजभर्तृमातुः पदौ-चरणौ प्रणमन्ति, तथा ज्येष्ठाया-बृहत्या निजकभगिन्या-मदनसुन्दर्या अपि पदौ प्रणमन्ति ॥ ९४६ ॥ ताभ्यां-श्वश्रूमदनासुन्दरीभ्यां ता अष्टापि अभिनन्दिताः-आशिषा सानन्दाः कृताः, कीदृशीभ्यां ताभ्यां ?-आनन्देन पूरितं मनो ययोस्ते आनन्द० मनसो ताभ्यां, च पुनर्मदनमञ्जूषया-विद्याधरराजपुत्र्या सर्व्वोऽपि प्राक्तनो वृत्तान्तः कथितः ॥ ९४७ ॥ ततो नृपः सानन्दः सन् ताभ्यो नवभ्योऽपि वधूभ्यो वस्त्रालङ्कारसारपरिवारं ददाति, च पुनरेकैकं नाटकं ददाति ॥ ९४८॥ ततो राज्ञा ज्येष्ठा मदना-मदनसुन्दरी पृष्टा-तव जनकमपि कथं-केन प्रकारेण आनाययामि ?, तदा तया उक्तं-हे स्वामिन् ! स मत्पिता कण्ठपीठे स्थितः कुठारो यस्य स एवम्भूत एतु-आगच्छतु ॥ ९४९ ॥ तच्च वाक्यं तथा-तेन प्रकारेण तस्मै राज्ञे दूतमुखेन यावत्कथापितं तावत् मालवस्य राजा-प्रजापालः कुपितश्च मन्त्रिभिर्भणितश्च, द्वौ चकारौ तुल्यकालं सूचयतः ॥ ९५० ॥

सामिअ ! असमाणेणं समं विरोहो न किज्जए कहवि । ता तुरिअं चिय किज्जउ वयणं दूयस्स भणियमिणं ॥ ९५१ ॥
काऊणं च कुहाडं कंठे राया पभायसमयंमि । मंतिसामंतसहिओ जा पत्तो गुड्डरदुवारे ॥ ९५२ ॥
ताव सिरिपालरन्ना मोआवेऊण तं गलकुहाडं । पहिराविऊण वत्थालंकारे सारपरिवारो ॥ ९५३ ॥
आणाविओ अ मज्झे दिन्ने य वरासणंमि उवविट्ठो । सो पयपालो राया मयणाए एरिसं भणिओ ॥
ताय ! तए जो तइया मह कम्मसमप्पिओ वरो कहिओ । तेणऽज्ज तुह गलाओ कुहाडओ फेडिओ एसो ॥

किमुक्तमित्याह–हे स्वामिन् ! असमानेन--स्वतोऽधिकेन समं--सह विरोधः कथमपि–केनापि प्रकारेण न क्रियते, तत्--तस्मात्कारणात् त्वरितं--शीघ्रं एव इदं--दूतेन भणितं वचनं क्रियताम् ॥ ९५१ ॥ ततश्च प्रभातसमये कण्ठे कुठारं कृत्वा मन्त्रिभिरमात्यैः सामन्तैश्च सहितो राजा यावत् गुड्डरद्वारे--पटावासद्वारे प्राप्तः ॥ ९५२ ॥ तावत् श्रीपालेन राज्ञा तं--कण्ठ–कुठारं मोचयित्वा–त्याजयित्वा वस्त्रालङ्कारान्--प्रधानस्थभूषणानि परिधाप्य सारः परिवारो यस्य स सा० सारपरिवारसहित इत्यर्थः ॥ ९५३ ॥ मध्ये--पटावासमध्ये च आनायितः दत्ते च वरासने--प्रधानासने उपविष्टः, एवम्भूतः स प्रजापालो राजा मदनसुन्दर्या ईदृशं भणित–उक्तः ॥ ९५४ ॥ किमित्याह--हे तात ! त्वया तदा-मत्पाणिग्रहणावसरे यो मत्कर्मसमर्पितो--मम कर्मणा आनीतो वरः कथितस्तेन मद्भर्त्राऽद्य तव गलात्--त्वत्कण्ठात् एष कुठारकः स्फेटितः--त्याजितः ॥ ९५५ ॥ ॥ १०७ ॥

तो विम्हिओ अ मालवराया जामाउअंपि पणमेइ । पभणेइ अ सामि ! तुमं महप्पभावोऽवि नो नाओ ॥
सिरिपालोऽवि नरिंदो पभणइ न हु एस मह पभावोत्ति । किंतु गुरुवइट्ठाणं एस पसाओ नवपयाणं ॥
सोऊण तमच्छरियं तत्थेव समागओ समग्गोऽवि । सोहग्गसुंदरीरूपसुंदरीपमुहपरिवारो ॥ ९५८ ॥
मिलिए य सयणवग्गे आणंदभरे य वट्टमाणे अ । सिरिपालेणं रन्ना नाडयकरणं समाइट्ठं ॥९५९ ॥
तो झत्ति पढमनाडयपेडयमाणंदिअं समुट्ठेइ । परमिक्का मूलनडी बहुंपि भणिया न उट्ठेइ ॥९६०॥

ततश्च विस्मितो--विस्मयं प्राप्तो मालवस्य राजा--प्रजापालो जामातरमपि श्रीपालं प्रणमति--नमस्करोति, च पुनः प्रभणति–वक्ति, हे स्वामिन् ! महान्प्रभावो यस्य स महाप्रभावोऽपि त्वं मया न ज्ञातः, श्रीपालोऽपि नरेन्द्रः प्रभणति, एष मम प्रभावो न हि अस्तीति, किन्तु गुरूपदिष्टानां नवपदानां एष प्रसादोऽस्ति ॥ ९५७ ॥ तत् आश्चर्यं श्रुत्वा सौभाग्यसुन्दरीप्रमुखः समग्रोऽपि–समस्तोऽपि परिवारस्तत्रैव–राजपटमण्डपे समागतः ॥ ९५८ ॥ अथ स्वजनानां–सम्बन्धिनां वर्गे--समूहे च मिलिते सति आनन्दभरे--हर्षोत्कर्षे च वर्त्तमाने सति श्रीपालेन राज्ञा नाटककरणं समादिष्टं, नाटककरणाज्ञा दत्तेत्यर्थः ॥ ९५९ ॥ ततः--तदनन्तरं झटिति--शीघ्रं प्रथमनाटकस्य पेटकं--वृन्दं आनन्दितं--हर्षितं सन् समुत्तिष्ठति परं, एका मूलनटी--मुख्यनर्त्तकी बहुभणितापि--बहूक्तापि न उत्तिष्ठति ॥ ९६० ॥

कह कहवि पेरिऊणं जाव समुट्ठाविया निरुच्छाहा । तो तीए सविसायं दूहयमेगं इमं पढियं ॥९६१॥
कहिं मालव कहिं संखउरि कहिं बब्बर कहिं नट्ट । सुरसुंदरि नच्चावियइ दइविहिं दलवि मरट्ट ॥९६२॥
तं वयणं सोऊणं जणणीजणयाइसयलपरिवारो । चिंतेइ विम्हियमणो एसा सुरसुंदरी कत्तो?॥९६३॥
उवलक्खिया य जणणीकंठंमि विलग्गिऊण रोयंती । जणएणं सा भणिआ को वुत्तंतो इमो वच्छे ?॥
भणिअं च तओ तीए ताय! तया तारिसीइ रिद्धीए । सहिया निएण पइणा संखपुरिपरिसरं पत्ता॥

निर्गत उत्साहो यस्याः सा निरुत्साहा मूलनटी कथं कथमपि प्रेरयित्वा यावत् समुत्थापिता तावत्तया--मूलनट्या सविषादं--विषादसहितं इदमेकं दोहानामकं छन्दः पठितम् ॥ ९६१ ॥ किमिदमित्याह--क्व ? मालवाख्यो देशः यत्र जन्माभूत्, क्व शङ्खपुरीनगरी ? यत्र परिणायिता, क्व बर्ब्बरदेशो यत्र विक्रीता, क्व नृत्यं--लोकानां पुरो नृत्यकरणं ? दैवेन मरट्टुत्ति--गर्वं दलयित्वा सुरसुन्दरी नर्त्त्यते--नृत्यं कार्यते ॥ ९६२ ॥ तद्वचनं श्रुत्वा जननीजनकादिसकलपरिवारो विस्मितं--आश्चर्यं प्राप्तं मनो यस्य स विस्मितमनाः सन् चिन्तयति--एषा सुरसुन्दरी कुतः समागता ? ॥ ९६३ ॥ उपलक्षिता--सर्वैर्ज्ञाता च सती जनन्याः कण्ठे विलग्य रुदंती--रोदनं कुर्वती सा--सुरसुन्दरी जनकेन--पित्रा भणिता--उक्ता हे वत्सेऽयं को वृत्तान्तोऽस्तीति ? ॥ ९६४ ॥ ततश्च--तदनन्तरं च तया--सुरसुन्दर्या भणितं, हे तात ! तदा--तस्मिन्नवसरेऽहं निजेन--स्वकीयेन पत्या--भर्त्रा सहिता तादृश्या ऋद्ध्या शङ्खपुर्य्याः 'परिसर' न्ति पार्श्वदेशं प्राप्ता ॥ ९६५ ॥



सुमुहुत्तकए बाहिं ठिओ अ जामाउओ स तुम्हाणं । सुहडाणं परिवारो बहुओ अ गओ सगेहेसुं ॥
रयणीए पुरबाहिं ठिआण अम्हाण निब्भयमणाणं । हणि मारित्ति करिंती पडिआ एगा महाधाडी॥
तो सहसा सो नट्ठो तुम्हं जामाउओ ममं मुत्तुं । धाडीभडेहिं ताए सिरीइ सहिया अहं गहिया ॥
नीआ य तेहिं नेपालमंडले विक्किआ य मुल्लेणं । गहिआ य सत्थवइणा एगेणं रिद्धिमंतेणं॥९६९॥
तेणावि ससत्थेणं नेऊणं सह बब्बरकुलंमि । महकालरायनयरे हट्टे धरिऊण विक्किणिया ॥ ९७० ॥

स युष्माकं जामाता सुमुहूर्त्तकृते--शुभमुहूर्त्तार्थं नगर्या बहिः स्थितश्च सुभटानां परिवारश्च बहुकः स्वगेहेषु नगरीमध्ये स्वस्वगृहेषु गतः ॥ ९६६ ॥ रजन्यां--रात्रौ पुराद्बहिःस्थितयोर्निर्भयं मनो ययोस्तौ निर्भयमनसौ तयोः आवयोरुपरि 'हणि मारि' इति ध्वनिं कुर्वन्ती एका महाधाटी पतिता ॥ ९६७ ॥ ततः--तदनन्तरं स युष्माकं जामाता मां मुक्त्वा--परित्यज्य सहसा--शीघ्रं नष्टः--पलायितः, अहं तया युष्मद्दत्तया श्रिया--लक्ष्म्या सहिता धाटीभटैर्गृहीता ॥ ९६८ ॥ च पुनस्तैर्धाटीभटैरहं नेपालमण्डले--नेपालदेशे नीता--अर्पिता मूल्येन विक्रीता च, एकेन ऋद्धिमता सार्थपतिना गृहीता च ॥९६९॥ तेनापि सार्थपतिना स्वसार्थेन सह बर्ब्बरकूले महाकालराजस्य नगरे नीत्वा हट्टे धृत्वा विक्रीता ॥ ९७० ॥

 

 

एगाए गणियाए गहिऊणं नट्टगीयनिउणाए । तह सिक्खविआ य अहं जह जाया नट्टिया निउणा ॥

महकालनामएणं बब्बरकूलस्स सामिणा तत्तो । नडपेडएग सहिया गहियाऽहं नाडयपिएणं ॥९७२॥

नाणाविहनट्टेहिं तेण नच्चाविऊण धूयाए । मयणसेणाइ पइणो दिन्ना नवनाडयसमेआ ॥ ९७३॥

तस्स य पुरओ नच्चंतिआइ जायाइं इत्तिअ दिणाइं । परमहुणा सकुडुंबं दट्ठूणं दुक्खमुल्लसियं ॥

तइया नियगुरुयत्तं मयणाइ विडंबणं च दट्ठूणं । जो अ मए मुद्धाए अखव्वगव्वो कओ आसि ॥

नृत्ये गीते च निपुणया एकया गणिकया–वेश्यया गृहीत्वा अहं तथा–तेन प्रकारेण शिक्षिता च यथा–येन प्रकारेण निपुणा–दक्षा नर्त्तकी जाता ॥ ९७१ ॥ ततः–तदनन्तरं महाकालनामकेन बर्ब्बरकुलस्य स्वामिना नटपेटकेन–नटसमूहेन सहिता अहं गृहीता, कीदृशेन महाकालेन ?–नाटकप्रियेण–नाटकं प्रियं यस्य स तेन ॥ ९७२ ॥ तेन राज्ञा नानाविधैः–बहुप्रकारैर्नृत्यैर्नर्त्तयित्वा मदनसेनाया निजपुत्र्याः पत्ये–भर्त्रे नवभिर्नाटकैः समेता–सहिताऽहं दत्ता ॥ ९७३ ॥ तस्य च मदनसेनाभर्त्तुः पुरतः–अग्रतो नृत्यन्त्या–नृत्यं कुर्वत्या मम इयन्ति–एतावन्ति दिनानि जातानि, परं अधुना–साम्प्रतं स्वकुटुम्बं दृष्ट्वा स्थिताया मम दुःखं उल्लसितम् ॥ ९७४ ॥ तदा–पाणिग्रहणावसरे निजगुरुकत्वं–स्वमहत्त्वं च पुनर्मदना(या)–मदनसुन्दर्या विडम्बनां दृष्ट्वा मया मुग्धया–मूढया यश्च अखर्वगर्वो–महानहङ्कारः कृत आसीत् ॥ ९७५ ॥

तं भञ्जिऊण मयणा पइणो नरनाहनमियचलणस्स । जेणाहं दासत्तं कराविया तं जयइ कम्मं ॥

इक्कच्चिय मह भइणी मयणा धन्नाण धूरि लहइ लिहं । जीए निम्मलसीलं फलियं एयारिसफलेहिं ॥

कयपावाण जियाणं मज्झे पढमा अहं न संदेहो । कुलसीलवज्जियाए चरियं एयारिसं जीए ॥९७८॥

मयणाए जिणधम्मो फलिओ कप्पद्दुमुव्व सुफलेहिं । मह पुण मिच्छाधम्मो जाओ विस-
पायवसरिच्छो ॥ ९७९ ॥

तं गर्व्वं भङ्क्त्वा–चूरयित्वा नरनाथैः–नरेन्द्रैः नतौ चलनौ–पादौ यस्य स तस्य मदनापतेः–मदनसुन्दर्या भर्त्तुर्दासत्वं येन कर्मणाऽहं कारिता तत्कर्म जयति–सर्वोत्कर्षेण वर्त्तते ॥ ९७६ ॥ धन्यानां–धन्यस्त्रीणां धुरि–आदौ एका मम भगिनी–स्वसा मदना–मदनसुन्दरी एव रेखां लभते–प्राप्नोति, यस्या निर्म्मलशीलं एतादृशैः फलैः फलितम् ॥ ९७७ ॥ कृतं पापं यैस्ते कृतपापास्तेषां जीवानां मध्ये प्रथमा–आद्याऽहमस्मि, अत्र न सन्देहः, कथमित्याह–कुलशीलवर्जिताया–उत्तमकुलाचाररहिताया यस्या एतादृशं चरितं–चरित्रं वर्त्तते ॥ ९७८ ॥ मदनाया जिनधर्मः कल्पद्रुमः–कल्पवृक्ष इव सुष्ठु–शोभनैः फलैः फलितः, मम पुनर्मिथ्याधर्म्मो–मिथ्यात्वमयो धर्मो विषपादपो–विषवृक्षस्तेन सदृक्षः–सदृशो जातोऽस्ति, दुष्टफलदायकत्वात् ॥ ९७९ ॥

मयणा नियकुलउज्जालणिक्कमाणिक्कदीवियातुल्ला । अहयं तु चीडउम्माडियव्व घणजणिअमालिन्ना॥
मयणं दट्ठूण जणा जएह सम्मत्तसत्तसीलेसु । मं दट्ठूणं मिच्छत्तदप्पकंदप्पभावेसुं ॥ ९८१ ॥
इच्चाइ भणंतीए तीए सुरसुंदरीइ लोआणं । उप्पाइओ पमोओ जो सो नहु नाडएहिं पुरा ॥९८२॥
सिरिपालेणं रन्ना वेगेणाणाविओ अ अरिदमणो । सुरसुंदरी य दिन्ना बहुरिद्धिसमन्निया तस्स ॥९८३॥
सुरसुंदरिसहिएणं अरिदमणेणावि सुद्धसम्मत्तं । सिरिपालरायमयणापसायओ चेव संपत्तं ॥ ९८४ ॥

मदना निजकुलस्य उज्ज्वालने-उज्ज्वलीकरणे प्रकाशने इतियावत् एका-अद्वितीया माणिक्यदीपिकया तुल्या-तत्सदृशी अस्ति, अहकं तु-अहं तु चीडोल्मुके इव निजकुले घनं जनितं-उत्पादितं मालिन्यं यया सा घनजनितमालिन्याऽस्मि, चीडं-श्यामकाचमयमणिकं उल्मुकं-अलातं ऊम्बाडेति प्रसिद्धम् ॥ ९८० ॥ अहो जना-लोका ! मदनां दृष्ट्वा सम्यक्त्व१ सत्त्व२-शीलेषु३ यतध्वं-यत्नं कुरुत, सत्त्वं धैर्यमित्यर्थः, मां दृष्ट्वा मिथ्यात्व१ दर्प२ कन्दर्प३ भावेषु-मिथ्यादर्शनमानकामविकारेषु यतध्वम् ॥ ९८१ ॥ इत्यादि पूर्वोक्तं भणन्त्या-कथयन्त्या तया-सुरसुन्दर्या लोकानां यः प्रमोदो-हर्ष उत्पादितः स हु इति निश्चलं पुरा-पूर्वं नाटकैर्नोत्पादितः ॥ ९८२ ॥ ततः श्रीपालेन राज्ञा वेगेन अरिदमनः कुमार आनायितश्च सुरसुन्दरी बह्व्या ऋद्ध्या समन्विता-संयुक्ता तस्मै-अरिदमनकुमाराय दत्ता च, द्वौ चकारौ तुल्यकालं सूचयतः ॥ ९८३ ॥ सुरसुन्दर्या सहितेन अरिदमनेनापि श्रीपालराजमदनसुन्दर्योः प्रसादत एव शुद्धसम्यक्त्वं सम्प्राप्तम् ॥ ९८४ ॥

जे ते कुट्ठियपुरिसा सत्त सया आसि तेऽवि मयणाए । वयणेण विहियधम्मा संजाया संति नीरोगा ॥
तेवि हु सिरिसिरिपालं भूवालं पणमयंति भत्तीए । रायावि कयपसाओ ते सव्वे राणए कुणइ ॥
मइसायरोऽवि मंती आगंतूणं नमेइ निवपाए । सोऽवि पुव्वंव रन्ना कओ अमच्चो सुकयकिच्चो ॥९८७॥
सुसुराण सालयाणं माउलपमुहाण नरवराणं च । अन्नेसिंपि भडाणं बहुमाणं देइ सो राया ॥९८८॥
ते सव्वेऽवि बहुभत्तिसंजुया भालमिलियकरकमला । सेवंति सया कालं तं चिय सिरिपालभूवालं॥

'जे ते' इति देशीभाषायाः ये सप्त शतानि कुष्ठिकपुरुषा आसन् तेऽपि मदनसुन्दर्या वचनेन विहितः--कृतो धर्मो यैस्ते विहितधर्माः सन्तो निरोगाः सञ्जाताः सन्ति ॥ ९८५ ॥ तेऽपि सप्तशतपुरुषाः श्रिया युक्तं श्रीपालं भूपालं-राजानं भक्त्या प्रणमन्ति--नमस्कुर्वन्ति, राजा श्रीपालोऽपि कृतः प्रसादो येन स कृतप्रसादः सन् तान् सर्वान् 'राणए' त्ति--राणा इत्याख्यान् करोति, लघुराजान् करोतीत्यर्थः ॥ ९८६ ॥ मतिसागरोऽपि मन्त्री आगत्य नृपस्य--श्रीपालस्य पादौ नमति, स मतिसागरोऽपि राज्ञा श्रीपालेन पूर्वमिव--पूर्ववत् अमात्यो--मन्त्रीकृतः, कीदृशः सः ?--सुष्ठु--शोभनानि कृत्या(ता)नि कार्याणि येन स तथा ॥ ९८७ ॥ स श्रीपालो राजा श्वशुरेभ्यः श्यालकेभ्यो--वधूभ्रातृभ्यो मातुलप्रमुखेभ्यो नरवरेभ्यो राजभ्यश्च पुनरन्येभ्योऽपि भटेभ्यो बहुमानं--सत्कारं ददाति ॥ ९८८ ॥ ते सर्वेऽपि--राजानो बहुभक्त्या संयुताः--सहिताः अत एव भालेषु--ललाटेषु मिलितानि--लग्नानि करकमलानि येषां ते तथाभूताः सन्तः सदा कालं--सर्वस्मिन्काले तमेव श्रीपालभूपालं सेवन्ते ॥ ९८९ ॥

अह अन्नदिणे मइसायरेण सामंतमंतिकलिएणं । विन्नत्तो नरनाहो भूमंडलमिलियभालेणं ॥
देव ! तुमं बालोवि हु पियपट्टे ठाविओऽवि दुट्ठेणं । उट्ठाविओऽसि जेणं सो तुह सत्तू न संदेहो ॥
संतेऽवि हु सामत्थे जो पिअरज्जंपि सत्तुणा गहिअं । नो मोआवइ सिग्घं सो लोए होइ हसणिज्जो ॥
एसो सामिय ! सयलो तुम्हाणं ऋद्धिसिन्नवित्थारो । पावेइ किं फलं जइ न हु लिज्जइ तं निअं रज्जं? ॥
ता काऊण पसायं सामिअ ! गिण्हेह तं निअं रज्जं । जं पिअपट्टनिविट्ठे पइं दिट्ठे मे सुहं होही ॥९९४॥

अथ--अनन्तरं अन्यस्मिन्दिने सामन्तैर्मन्त्रिभिश्च कलितेन--युक्तेन मतिसागरेण मन्त्रिणा नरनाथो–राजा श्रीपालो विज्ञप्तः, कीदृशेन मतिसागरेण ?–भूमण्डले मिलितो--लग्नो भालो--ललाटं यस्य स तेन तथा ॥ ९९० ॥ कथं विज्ञप्त इत्याह–हे देव--हे महाराज ! त्वं बालोऽपि पितृपटे स्थापितोऽपि येन दुष्टेन उत्थापितोऽसि स तव शत्रुः–वैरी अस्ति, अत्रार्थे न सन्देहः, ॥ ९९१ ॥ सामर्थ्ये सत्यपि हु इति निश्चितं यः पुमान् शत्रुणा–वैरिणा गृहीतं पितृराज्यं–निजजनकराज्यं शीघ्रं–तत्त्वणं नो मोचयति–न त्याजयति स लोके हसियो–हसितुं योग्यो भवति ॥ ९९२ ॥ हे स्वामिन् ! युष्माकं सकलः–सर्वः एषः–अयं ऋद्धेः सैन्यस्य च विस्तारः किं फलं प्राप्नोति ? निष्फल इत्यर्थः, यदि तत् निजं राज्यं न हि लायते–न गृह्यते निजराज्ये गृहीते एव एष सफलतां यातीत्यर्थः ॥ ९९३ ॥ तत्–तस्मात्कारणात् हे स्वामिन् ! प्रसादं कृत्वा यूयं निजं–स्वकीयं तत् राज्यं गृह्णीत यत्–यतः कारणात् पइंति–त्वां प्रति पितुः पट्टे निविष्टे–उपविष्टे दृष्टे सति मे–मम सुखं भविष्यति ॥९९४॥

तो पभणइ नरनाहो अमच्च ! सच्चं तए इमं भणिअं । किंतु उवायचउक्कक्कमेण किज्जंति कज्जाइं ॥
जइ सामेणं सिज्झइ कज्जं ता किं विहिज्जए दंडो ? । जइ समइ सक्कराए पित्तं ता किं पटोलाए? ॥९९६॥
तत्तो मंती पभणइ अहो पहो ! ते वओऽहिआ बुद्धी । गंभीरया समुद्दाहिआ महीओऽहिआ खंती ॥
ता पेसिज्जउ एसो चउरमुहो नाम दिअवरो दूओ । जो दूअगुणसमेओ अत्थि जए इत्थ विक्खाओ ॥

ततः–तदनन्तरं नरनाथो–राजा श्रीपालः प्रभणति, हे अमात्य !–हे मन्त्रिन् ! त्वया इदं सत्यं भणितं, किन्तु उपायानां–सामदामदण्डभेदाख्यानां यच्चतुष्कं तस्य क्रमेण कार्याणि क्रियन्ते ॥ ९९५ ॥ यदि साम्ना–मधुरवचनेन कार्यं सिध्यति तत्–तर्हि किं–किमर्थं दण्डो विधीयते–क्रियते, अमुमेवार्थमर्थान्तरन्यासेन द्रढयति, पित्तं–रोगविशेषो यदि शर्करया–सितोपलया शाम्यति तत्–तर्हि पटोलया–कोशातक्या चारवल्ल्या किं ?, न किमपि कार्यमित्यर्थः ॥ ९९६ ॥ ततः–तदनन्तरं मन्त्री प्रभणति, अहो इति आश्चर्ये हे प्रभो !–हे स्वामिन् ! तव बुद्धिर्वयसोऽधिका वर्त्तते, तव गम्भीरता समुद्रादधिका वर्त्तते, चान्तिः(च क्षान्तिः)क्षमा महीतः–पृथ्वीतोऽधिकाऽस्ति ॥ ९९७ ॥ ततः–तस्मात्कारणात् एष चतुर्मुखो नाम द्विजवरो–ब्राह्मणेषु श्रेष्ठो दूतः प्रेष्यताम्, यश्चतुर्मुखो दूतो गुणैः–वाग्मित्वादिभिः समेतो--युक्तोऽत्र जगति विख्यातः–प्रसिद्धोऽस्ति ॥ ९९८ ॥

सो ओअतेअमइबलकलिओ सम्माणिऊण नूवइणा। संपेसिओ तुरंतो पत्तो चंपाइ नयरीए ॥
तत्थाजिअसेणनरेसरस्स पुरओ पसन्नवयणेहिं। सो दूओ चउरमुहो एवं भणिउं समाढत्तो ॥
नरवर! तए तया जो सिरिपालो भायनंदणो बालो। भूवालपयपइट्ठो दिट्ठो भूभारअसमत्थो ॥
तो तं भारं आरोविऊण निअयंमि चेव खंधंमि। सयलकलासिक्खणत्थं जो अ तए पेसिओ आसि॥
सो सयलकलाकुसलो अतुलबलो सयलरायनयचलणो। चउरंगबलजुओ तुह लहुअत्तकए इमो एइ॥

ओजो–मानसं बलं तेजोः–शरीरप्रतापो मतिः–बुद्धिः बलं–पराक्रमस्तैः कलितो–युक्तः स दूतो भूपतिना–श्रीपालमहाराजेन सम्मान्य–सत्कार्य सम्प्रेषितः सन् त्वरमाणः–शीघ्रं गच्छन् चम्पायां नगर्यां प्राप्तः ॥ ९९९ ॥ तत्र–चम्पायां नगर्यां स चतुर्मुखो दूतो अजितसेननरेश्वरस्य पुरतः–अग्रतः प्रसन्नवचनैः–मधुरवाक्यैरेवं भणितुं–वक्तुं समारब्धः–प्रारम्भं कृतवान् ॥ १००० ॥ हे नरवर–हे राजन्! त्वया तदा–तस्मिन्काले यो भ्रातृनन्दनो–भ्रातुः पुत्रः श्रीपालो बालो भूपालपदे–राजपदे प्रतिष्ठा स्थितिर्यस्य स तथाभूतो बालत्वाद्भूभारे–पृथ्वीभारोत्पाटनेऽसमर्थो दृष्टः ॥ १००१ ॥ ततस्तं भारं निजके–स्वकीये एव स्कन्धे आरोप्य–संस्थाप्य च पुनः यः श्रीपालः सकलकलाशिक्षणार्थं त्वया प्रेषितो–विदेशे मुक्त आसीत् ॥ १००२ ॥ स श्रीपालः सकलकलासु कुशलो–निपुणस्तथा अतुलं–सर्वोत्कृष्टं बलं–सैन्यं यस्य स तथा पुनः सकलराजैर्नतौ चलनौ पादौ यस्य स तथा पुनश्चतुरङ्गं यद्बलं–सैन्यं तेन युक्तोऽयं तव लघुकृते–लघुत्वकरणार्थं एति–आगच्छति ॥१००३॥

ता जुज्जए तुज्झवि तंमि रज्जभारावयारणं काउं। जं जुन्नथंभभारो लोएवि ठविज्जइ नवेसु॥१००४॥
अन्नं च तस्स रन्नो पयपंकयसेवणत्थमन्नेऽवि। बहवेऽवि हु नरनाहा समागया संति भत्तीए ॥१००५॥
जं तुब्भे निअयावि हु नो पत्ता तस्स मिलणकज्जेऽवि। सावि हु तक्किज्जइ दुज्जणेहिं नूणं कुलविरोहो॥
जो पुण कुले विरोहो सो रिउगेहेसु कप्परुक्खसमो। तेण न जुज्जइ तुम्हं परुप्परं मच्छरो कोऽवि ॥
सोवि हु किज्जउ जइ किर नज्जइ अहमम्हि इत्थ सुसमत्थो। कत्थ तुमं खज्जोओ कत्थ य सो चंडमत्तंडो?॥

ततः–तस्मात्कारणात् तवापि तस्मिन् श्रीपाले राज्यभारस्य अवतारणं कर्त्तुं युज्यते, यत्–यतो लोकेऽपि जीर्णस्तम्भस्य भारो नवेषु–नवीनस्तम्भेषु स्थाप्यते ॥१००४॥ अन्यच्च–अपरं च तस्य राज्ञः पदपङ्कजयोः–चरणकमलयोः सेवनार्थं अन्येऽपि बहवोऽपि नरनाथा–राजानो भक्त्या समागताः सन्ति ॥ १००५ ॥ यत् यूयं निजका अपि–आत्मीया अपि तस्य–श्रीपालराजस्य मिलनकार्येऽपि–मिलनार्थमपि नो प्राप्ताः सोऽपि–स एव कुलविरोधो–गृहविरोधो, नूनं–निश्चयेन दुर्जनैः–शत्रुभिस्तर्क्यते–अभिलष्यते, सोऽपीति–अपिशब्द एवकारार्थः ॥ १००६ ॥ यः पुनः कुले विरोधः स रिपुगेहेषु–वैरिगृहेषु कल्पवृक्षसमः–कल्पवृक्षतुल्योऽस्ति, तेन कारणेन युष्माकं परस्परम्–अन्योऽन्यं कोऽपि मत्सरो–द्वेषो न युज्यते ॥ १००७ ॥ सोऽपि–गृहविरोधोऽपि क्रियतां यदि किलेति–निश्चयेन अहं अत्र–विरोधे सुतराम्–अतिशयेन समर्थोऽस्मीति ज्ञायते, परं क्व त्वं खद्योततुल्यः कुत्र च स श्रीपालश्चण्डमार्त्तण्डः–प्रचण्डसूर्यसदृशः? भवतोर्द्वयोः खद्योतसूर्ययोरिव महदन्तरमस्तीति भावः ॥१००८

कत्थ तुमं सरसरसवससयसमाणोसि देव! हीणवलो। कत्थ य सो रयणायरमेरुमयंदेहिं सारिच्छो ॥
जइ तं रुट्टोऽसि न जीविअस्स ता झत्ति भत्तिसंजुत्तो। सिरिसिरिपालनरेसरपाए अणुसरसु सुपसाए ॥
॥ ११३ ॥ जइ कहवि गव्वपव्वयमारूढो नो करेसि तस्साणं। तो होही जुज्झसज्जो कज्जपयं इत्तिअं चेव ॥

पुनर्हे देव!-हे राजन्! कुत्र त्वं? कुत्र च स श्रीपालः?, कथमित्याह-त्वं तु सरःसर्षपशशकैः समानः-तुल्योऽसि, सरः-सरोगः सर्षपो-लघुधान्यविशेषः शशको-लघुजन्तुविशेषः तैः सदृश इत्यर्थः, अतएव[हीनंव]हीनं बलं यस्य स हीनबलस्त्वमसि, स श्रीपालस्तु रत्नाकरमेरुमृगेन्द्रैः सदृक्षः-तुल्योऽस्ति, रत्नाकरः-समुद्रः मेरुः-सुरगिरिः मृगेन्द्रः-सिंहस्तैः सदृश इत्यर्थः, एतावता क्व सरः? क्व समुद्रः? क्व सर्षपः? क्व मेरुः? क्व शशकः? क्व सिंहः? इति भावः ॥ १००९ ॥ यदि त्वं जीवितस्योपरि न रुष्टोऽसि तत्-तर्हि झटिति-शीघ्रं भक्त्या संयुक्तः-सहितः सन् श्रीश्रीपालनरेश्वरस्य पादौ-चरणौ अनुसर-सेवस्व, कीदृशौ पादौ?-सुष्ठु-शोभनः प्रसादो ययोस्तौ सुप्रसादौ ॥ १०१० ॥ यदि कथमपि गर्वो-अहङ्कारस्तद्रूपं पर्वतमारूढः सन् तस्य श्रीपालस्य आज्ञां नो करोषि ततः-तर्हि युद्धाय-युद्धार्थं सज्जो भव, कार्यपदं इयदेव-एतावदेवास्ति ॥ १०११ ॥

॥ ११३ ॥

तं सोऊणं सो अजिअसेणरायावि एरिसं भणइ। दूओ अ दिओ अ तुमं नज्जसि एएण वयणेणं ॥
पढमं महुरं मज्झंमि अंबिलं कडुअतित्तयं अंते। वुत्तं भुत्तं व तुमं जाणंतो होसि चउरमुहो॥१०१३॥
निअया न केऽवि अम्हे तस्स न सो कोऽवि अम्ह निअओत्ति। सो अम्हाणं सत्तु अम्हेवि अ सत्तुणो तस्स॥
जं जीवंतो मुक्को सो तइआ बालओत्ति करुणाए। तेणऽम्हे हीणबला सो बलिओ वन्निओ तुमए॥

तद्दूतवचनं श्रुत्वा सोऽजितसेनो राजापि ईदृशं वचनं भणति, कीदृशं भणतीत्याह-अरे त्वं एतेन वचनेन दूतश्च(द्विजो)-ब्राह्मणो ज्ञायते ॥ १०१२ ॥ प्रथमं मधुरं, मध्ये आम्लं, अन्ते कटुकं तिक्तं च-तीक्ष्णं ईदृशं वचनं वक्तुम्-कथयितुं ईदृशं भोजनं भोक्तुं जानन् त्वं चतुर्मुखो भवसि, चत्वारि मुखानि यस्य स तथा ॥ १०१३ ॥ वयं केऽपि तस्य-तव स्वामिनो निजकाः-स्वकीया न स्मः, स-तव स्वामी अस्माकं कोऽपि निजको नास्तीति, किन्तु स त्वत्स्वामी अस्माकं शत्रुरस्ति, वयमपि च तस्य शत्रवः स्मः ॥ १०१४ ॥ स-तव स्वामी तदा-तस्मिन्नवसरे बालकोऽस्तीति ज्ञात्वाऽस्माभिः करुणया-अनुकम्पया यज्जीवन्मुक्तस्तेन कारणेन त्वया वयं हीनबला वर्णिताः, स निजस्वामी बलिको-बलवान् वर्णितः ॥ १०१५ ॥

॥ ११४ ॥ निअजीविअस्स नाहं रुट्ठो रुट्ठो हु तस्स जमराया । जेणाहं निच्चिंतो सुत्तो सीहुव्व जग्गविओ ॥
जं तं दूओऽसि दिओऽसि तेण मुक्कोऽसि गच्छ जीवंतो । तुह सामिअहणणत्थं एसोऽहं आगओ सिग्घं ॥
दूओवि दुअं गंतुं सव्वं निअसामिणो निवेएइ । तत्तो सो सिरिपालो भूवालो चल्लिओ सबलो ॥
चंपाए सीमाए गंतूणावासिअं समग्गंपि । सिरिपालरायसिन्नं तडिणीतडउच्चभूमीए ॥ १०१९ ॥
सो अजिअसेणरायावि सम्मुहो आविऊण तत्थेव । आवासिओ अ अभिमुहमहीइ सिन्नेण संजुत्तो ॥

अहं निजजीवितस्योपरि न रुष्टोऽस्मि किन्तु हु इति निश्चितं तस्य–त्वत्स्वामिन उपरि यमराजो रुष्टोऽस्ति, येन त्वत्स्वामिना अहं निश्चिन्तः सुप्तः सिंह इव जागरितः ॥ १०१६ ॥ यत्त्वं दूतोऽसि पुनर्द्विजोऽसि तेन कारणेन मुक्तोऽसि जीवन् गच्छ, तव स्वामिनो हननार्थं–मारणार्थं एषोऽहं शीघ्रं–झटिति आगतः ॥ १०१७ ॥ ततो दूतोऽपि शीघ्रं–झटिति गत्वा सर्वं वृत्तान्तं निजस्वामिने निवेदयति–कथयति, ततः–तदनन्तरं स श्रीपालो भूपालः सबलः–सैन्यसहितश्चलितः ॥ १०१८ ॥ चम्पाया नगर्य्याः सीमायां गत्वा समग्रं–समस्तमपि श्रीपालराजस्य सैन्यं--कटकं तटिन्यां--गङ्गानद्यास्तटे उच्चभूमौ आवासितम्–निवेशं कृतवत् ॥ १०१९ ॥ च पुनः सः–अजितसेनो राजापि सम्मुखं आगत्य तत्रैव गङ्गानद्यास्तटे एव अभिमुखमह्यां--सम्मुखभूमौ सैन्येन--निजकटकेन संयुक्तः--सहितः आवासितो--निवेशं कृतवान् ॥ १०२० ॥

॥ ११४ ॥

सोहिज्जइ रणभूमी किज्जइ पूआ य सयलसत्थाणं । सुहडाणं च पसंसा किज्जइ भट्टेहिं उच्चसरं ।
किज्जंति भूहरीओ सुहडाणं चारुचंदणरसेण । पूरिज्जंति अ सिहरा चंपयकुसुमेहिं पवरेहिं ॥१०२२॥
वामपयतोडरेहिं दाहिणकरचारुवीरवलएहिं । वारणयचामरेहिं नज्जंति फुडं महासुहडा ॥ १०२३ ॥
गयगज्जिअं कुणंता सुहडगणा तत्थ सीहनायं च । मुच्चंता नच्चंता कुणंति वरवीरवरणीओ ॥

ततो रणभूमिः–सङ्ग्रामभूमिका शोध्यते–प्रस्तरकण्टकाद्यपनयनेन शुद्धा क्रियते, च पुनः सकलशस्त्राणां पूजा क्रियते, च पुनः भट्टैः–भट्टलोकैः उच्चः स्वरो यत्र कर्मणि तत् उच्चस्वरं यथा भवेत्तथा सुभटानां–योधानां प्रशंसा–श्लाघा क्रियते ॥ १०२१ ॥ तथा सुभटानां चारु–सुन्दरं यच्चन्दनं तस्य रसेन भूहरीओत्ति–तिलकविशेषाः क्रियन्ते, च पुनः प्रवरैः–प्रधानैश्चम्पककुसुमैः--चम्पकपुष्पैः सुभटानां शिरस्सु शेषराणि पूर्यन्ते ॥ १०२२ ॥ वामपदे--वामचरणे टोडरैः–मान्यविशेषैस्तथा दक्षिणे करे चारुभिः--मनोज्ञैर्वीरवलयैः--वीरत्वसूचकैः कटकविशेषैस्तथा वारणशब्देन आतपवारणमुच्यते आतपवारणैः–छत्रैः पुनश्चामरैः स्फुटं–प्रकटं महासुभटा ज्ञायन्ते ॥१०२३॥ तत्र सैन्यद्वये सुभटानां गणाः--समूहा गजवत् गर्जितं कुर्वन्तश्च पुनः सिंहनादं मुंचन्तः पुनर्नृत्यन्तो--नृत्यं कुर्वन्तो वरवीरवरणानि–परस्परं शस्त्रप्रहारयाचनानि कुर्वन्ति ॥ १०२४ ॥

जणयपुरओवि तणयं कावि हु जणणी भणेइ वच्छ! तए। तह कहवि जूझिअव्वं जह तुह ताओ न संकेइ॥
अन्ना भणेइ वच्छाहं वीरसुआ पिआ य वीरस्स । तह तुमए जइअव्वं होमि जहा वीरजणणीवि॥
धन्ना सच्चिअ नारी जीए जणओ पई अ पुत्तो अ। वीरावयायपयवीसमन्निआ हुंति तिन्निवि॥१०२७॥
कावि पई पइ जंपइ महमोहो नाह ! नेव कायव्वो। जीवंतस्स मयस्स व जं तुह पुट्ठिं न मुंचिस्सं॥

कापि जननी--माता जनकस्य पुरतः--अग्रतस्तनयं--पुत्रं भणति--कथयति, हे वत्स ! त्वया तथा--तेन प्रकारेण कथमपि योद्धव्यं--युद्धं कर्त्तव्यं यथा तव तातः--पिता न शङ्कते ॥ १०२५ ॥ अन्या काचित् स्त्री भणति, हे वत्स ! अहं वीरस्य--शूरस्य सुता--पुत्री अस्मि, च पुनः वीरस्य प्रिया--पत्नी अस्मि, अथ त्वया तथा--तेन प्रकारेण यतितव्यं--युद्धे यत्नः कार्यो यथा वीरस्य जनन्यपि भवामि ॥ १०२६ ॥ सा एव नारी--स्त्री धन्याऽस्ति, यस्या जनकः१ पतिश्च२ पुत्रश्च३ त्रयोऽपि वीरावदातपदवीसमन्विता भवन्ति, वीर इत्येवंरूपा या अवदातपदवी--निर्मलपदवी तया समन्विता--युक्ता इति विग्रहः ॥ १०२७ ॥ कापि स्त्री पतिं--स्वभर्त्तारं प्रति जल्पति--वक्ति, हे नाथ--हे स्वामिन् ! मम मोहो नैव कर्त्तव्यः, यद्--यस्मात्कारणात् अहं तव जीवतो मृतस्य वा पृष्ठिं न मोक्ष्यामि--त्यक्ष्यामि ॥ १०२८ ॥

॥ ११५ ॥

कावि हु हसेइ रमणं महनयणहओवि होसि भयभीओ। नाह ! तुमं विज्जुज्जलभल्लअघाए कहं सहसि?॥
इत्थंतरंमि उब्भडसुहडकयाडंबरं व असहंतो । सूरो फुरंततेओ संजाओ पुव्वदिसिभाए ॥१०३०॥
मिलिऊण तक्खणं चिअ अग्गिमसेणाइ उब्भडा सुहडा । मग्गणमसिक्खिअंपि हु कुणंति पढमासिघायाणं ॥ १०३१ ॥
खग्गाखग्गि सरासरि कुंताकुंतिप्पयंडदंडं च । जुज्झंता ते सुहडा संजाया एगमेगं च ॥ १०३२ ॥

कापि स्त्री रमणं--भर्त्तारं हसति, हे नाथ ! त्वं मम नयनाभ्यां हतोऽपि भयभीतो भवसि, तर्हि विद्युदिव--तडिदिव उज्ज्वला ये भल्लयन्ति-कुन्तास्तेषां घातान्--प्रहारान् कथं सहसे--सहिष्यसे ? ॥१०२९॥ अत्रान्तरे--अस्मिन्नवसरे उद्भटा--उद्धता ये सुभटास्तैः कृतं आडम्बरं असहमान इव सूरः--सूर्यः पूर्वदिग्भागे--पूर्वस्यां दिशि स्फुरत्--सश्वरत्तेजो यस्य स स्फुरत्तेजाः सञ्जातः--उदित इत्यर्थः ॥ १०३० ॥ तदा अग्रिमसेनयोः--पुरोवर्त्तिकटकयोः उद्भटाः सुभटास्तत्क्षणं--तत्काल एव परस्परं मिलित्वा प्रथमं येऽसिघाताः--खड्गप्रहारास्तेषां असि(शि)क्षितमपि मार्गणं--याचनां कुर्वन्ति ॥ १०३१ ॥ खड्गैः खड्गैः प्रहृत्य इदं युद्धं प्रवृत्तमिति खड्गाखड्गि, तथा शरैः शरैः प्रहृत्य इदं युद्धं प्रवृत्तमिति शराशरि, तथा कुन्तैः कुन्तैः प्रहृत्य इदं युद्धं प्रवृत्तमिति कुन्ताकुन्ति, च पुनः प्रचण्डा दण्डा यत्र कर्मणि तत्प्रचण्डदण्डं यथा स्यात्तथा युध्यमाना--युद्धं कुर्वाणास्ते सुभटा एकमेकं च सञ्जाताः--सर्वेऽपि एकत्रीभूता इत्यर्थः ॥ १०३२ ॥

कस्सवि भडस्स सीसं खग्गच्छिन्नं च वालविकरालं। रविणोऽवि राहुसंकं करेइ गयणंमि उच्छलिअं॥
कोऽवि भडो सिल्लेणं गयणे उल्लालिओ महल्लेणं। दीसइ सुरंगणाहिं सग्गमिअंतो सदेहुव्व॥१०३४॥
कोऽवि हु भडो भिडंतो छिन्नसिरो खग्गखेडयकरो अ। गयसक्खणसीसभारो पणच्चए जायहरि-
सुव्व ॥ १०३५ ॥

कस्यापि भटस्य-शूरस्य शीर्षं-मस्तकं खड्गेन छिन्नं वालैः-केशैर्विकरालं गगने-आकाशे उच्छलितं सत् रवेः-सूर्यस्यापि राहो-राहुग्रहस्य शङ्कां करोति-उत्पादयति ॥ १०३३ ॥ कोऽपि भटो महता 'सिल्लेणं' ति भिन्दिपालेन बरछीइत्याख्येन शस्त्रेण गगने-आकाशे उल्लालित-ऊर्द्धमुच्छालितः सन् सुराङ्गनाभिः-देवाङ्गनाभिः सदेहः-शरीरसहितः स्वर्गमायन्-आगच्छन् इव दृश्यते-विलोक्यन्ते ॥ १०३४ ॥ कोऽपि भटो 'भिडन्तो' त्ति युध्यमानो वैरिणा छिन्नं शिरो यस्य स छिन्नशिराः, च पुनः खड्गखेटके-तरवारिस्फरकेः करयोः-हस्तयोर्यस्य स खड्गखेटककरः, पुनः क्षणेन सह वर्त्तमानं सक्षणं ईदृशं यत् शीर्षं-मस्तकं तस्य भारः सक्षणशीर्षभारः स गतो यस्य स तथाऽत एव जातो हर्षो यस्य स जातहर्ष इव प्रकर्षेण नृत्यति-प्रनृत्यति ॥ १०३५ ॥



तत्थ य पप्पडभंगं भज्जंति रहा य कोहलयभेअं। भज्जंति गया तुरया चिब्भडछेअं च छिज्जंति ॥
तओ-सत्थच्छुरिआ बहुमुंडमंडिआ धडिआ भडधडेहिं। अंतेहिं निरंतरिआ भरिआ मयहयगयसएहिं॥
रुहिरोहजणिअकद्दममज्जविमद्दिज्जमाणमडयाणं । कडयडसद्दरउद्दा खणेण सा रणमही जाया ॥

तत्र च-सङ्ग्रामे रथाः पर्पटभङ्गं भज्यन्ते, यथा पर्पटानां भङ्गो भवेत्तथा भज्यन्ते इत्यर्थः, च पुनः गजा-हस्तिनः कुष्माण्डकभेदं भिद्यन्ते-विदार्यन्ते, यथा कुष्माण्डकफलानां भेदो--विदारणं भवेत्तथा भिद्यन्ते इत्यर्थः, च पुनः तुरगा--अश्वाश्चिर्भटच्छेदं छिद्यन्ते, यथा चिर्भटफलच्छेदो भवेत्तथा--छिद्यन्ते इत्यर्थः ॥ १०३६ ॥ ततः--तदनन्तरं सा रणमही--सङ्ग्रामभूमिः क्षणेन ईदृशी जाता इति द्वितीयगाथान्त्यपादेऽन्वयः, कीदृशीत्याह--शस्त्रैः आस्तृता--संस्तृता, पुनः बहुभिर्मुण्डैः--मस्तकैर्मण्डिता--भूषिता, पुनः भटानां--वीराणां धडेहिन्ति--निर्जीवकलेवरैःस्थपुटिता--विषमोन्नतभूता, पुनः अन्त्रैः--शरीरावयवविशेषैर्निरन्तरिता--अन्तररहिता व्याप्तेत्यर्थः पुनः मृतानां हयानां गजानां च शतैर्भरिता ॥ १०३७ ॥ तथा रुधिरस्य ओघः-प्रवाहस्तेन जनित-उत्पादितो यः कर्दमस्तन्मध्ये विमर्द्यमानानि यानि मृतकानि तेषां यः कडकडशब्दस्तेन रौद्रा-भयङ्करा ईदृशी सा रणभूमिर्जातेत्यर्थः ॥ १०३८ ॥

